Vol. VII.

(a) Bhāmaha and his Kāvyālaṅkārā, by Baṭukanātha S'armā and Baladeva Upādhyāya.

(b) Some variants in the readings of the Vais'eṣika Sūtras, by Gopinātha Kavirāj.

(c) History and Bibliography of Nyāya Vais'eṣika Literature, by Gopinātha Kavirāj.

(d) An attempt to arrive at the correct meaning of some obscure Vedic words, by Sītāram Joshi.

(e) A comparison of the contents of the Rig Veda, Vajasaneya, Taittiriya, and Atharva Veda (Chāturadhyāyika) Prātis'ākhyas, by Mangal Deva Shāstri.

(f) An Index to the Ramayaṇa, by Manmatha Nāth Roy.

(g) An Index to S'abara's Bhāṣya, by the late Col. J. A. Jacob.

(h) Gleanings from the Tantras, by Gopinātha Kavirāj.

(i) The date of Madhusudana Saraswati, by Gopinātha Kavirāj.

(j) Descriptive notes on Sanskrit Manuscripts, by Gopinātha Kavirāj.

(k) A note on the meaning of the word Parārdha, by Umes'a Mis'ra.

Vol. VIII.

(a) Indian Philosophy, by Taraknath Sanyal.

(b) An Index to the Rāmāyaṇa, by Manmatha Nath Roy.

(c) Index to S'abara's Bhāṣya, by the late Col. J. A. Jacob.

(d) Hari Svāmi, the commentator of S'atapatha Brāhmana and the date of Skanda Svami the commentator of the Ṛigveda, by Mangaladeva S'āstri.

(e) Mysticism in Veda, by Gopināth Kaviraj.

(f) The Deva dāsī: a brief history of the Institution, by Manmatha Nātha Roy.

Vol. IX (In progress)

(a) The Life of a Yogin, by Gopinātha Kavirāj.

## THE PRINCESS OF WALES SARASVATI BHAVANA STUDIES

(SANSKRIT)

### SARASVATALOKA

Edited by

GOPINATH KAVIRAJ, M. A.

Kirana 1 ( In progress )

(a) Mangalam, etc, by Nārāyaṇa S'āstri Khiste.

(b) Mimansaka mata saṃgraha, by Haranchndra Bhaṭṭācharya.

(c) S'rimad Ācharya Mandana Mis'ra by Chinna Swami S'astri

(d) Bhagavato Buddhasya Charitam Upades'as'cha : by Gopinatha Kaviraj.

Kirana I ( Supplement )

Sanskrita Kavi Parichaya-(Bharavi) by Nanda Kishore Sharma.

Kirana II ( In progress )

(a) S'āradā Prasādanam by Nārâyana S'āstri Khiste.

(b) Chūḍāmaṇi Dars'anam by S'as'adhara Tarkachūḍāmaṇi.

To be had of
The Superintendent
Government Press, U. P.,
Allahabad.

# SARASVATĪ BHAVANA GRANTHAMĀLĀ

Vol. 46

*PART II*

GENERAL EDITOR
Surati Narayana Mani Tripathi
Vice-Chancellor
Varanaseya Sanskrit Vishvavidyalaya,
Varanasi.

# KĀVYA PRAKASA DIPIKA

by

CHAṆḌĪ DĀSA

VARANASI
1965

व्यभिचारिणो ब्रूते—

(४६) निर्वेदग्लानिशङ्काऽऽख्यास्तथाऽसूयामदश्रमाः।
आलस्यं चैव दैन्यं च चिन्ता मोहः स्मृतिर्धृतिः ॥३२॥

ऽनुबन्धयोगेऽपि स्थायित्वं न लभते पूर्वप्रसिद्धपात्रगतस्थैर्यप्रत्यभिज्ञाविरहात्। तत्र हि रत्यादय एव स्थिराः, उन्मादादादयस्तु बुद्बुदवत् मग्ननिमग्नस्वरूपा(१) एव। तथा च हासशोकादीनां क्वचन स्थायिनामपि रत्युत्साहादौ तदभावात् सञ्चारिता। त्रयस्त्रिंशद्व्यभिचारिण इति स्वयोगत्वव्यवच्छेदार्थम्। एते हि न क्वचित् स्थायिनः। एतेषाञ्च सात्त्विकेभ्यः सत्त्वाविर्भावविशेषेभ्यो न वैधर्म्यं, किन्तु रत्यादिभ्य एव(२)। यद्वा तेषां नान्तःकरणपरिणतित्वमिति (?) न ते व्यभिचारिणः। व्यभिचारिणो हि भावाश्चित्तवृत्तिविशेषा एवेति सकलमनाकुलम्(३)।

---

(१) तथा च भावप्रकाशनकारः—"मज्जन्तश्च निमज्जन्तः कल्लोलास्ते यथाऽर्णवे। तस्योत्कर्षं वितन्वन्ति यान्ति तद्रूपतामपि। तथा स्थायिनि निर्मग्ना उन्मग्ना व्यभिचारिणः। पुष्णन्ति स्थायिनं स्वांश्च तत्र यान्ति रसात्मताम्" इति।

(२) "एतच्च-केभ्यः-सत्त्वाविर्भावविशेषेभ्यो नसञ्चनसञ्चारिभ्यः न वैधर्म्य"मिति मूलपुस्तकेऽस्फुटः पाठः। एतदुत्तरवाक्ये च पाठो न सम्यङ् इति प्रतिभाति।

(३) भावपदेन चित्तवृत्तिविशेषा एव विवक्षिता इति प्रागेवोक्तम्। तेषामात्यन्त्यं लौकिके जगति यद्यपि सम्भवति तथाप्यलौकिककाव्यार्थमये रसात्मनीयत्ता सम्भवतीति सुस्थित एव तेषां गणना-

व्रीडा चपलता हर्ष आवेगो जडता तथा ।
गर्वो विषाद औत्सुक्यं निद्राऽपस्मार एव च ॥३२॥

---

चिन्ताग्लानिदैन्यादिकृततत्त्वज्ञानापदीर्ष्यादिजं स्वावमाननं निर्वेदः । निधुवनादिजा निष्प्राणायमानताकम्पानुत्साहादिहेतुर्ग्लानिः । आत्मदुर्नयादेरनिष्टोत्प्रेक्षणकृतकम्पास्यशोषवैवर्ण्यादिहेतुः शङ्का । गर्वदौर्जन्यादिभूरवज्ञादोषैकदर्शनादिकृदसूया परैश्वर्यासहिष्णुता । मदिराऽऽदिकृतः सम्मोहानन्दसम्भेदः स्खलनहसितादिकारी मदः । स्वेदाङ्गभङ्गादिकृतमनःखेदः सम्भोगादिजः श्रमः । जृम्भाऽऽसितादिकृत्क्रियावैरस्यं नीचादेरालस्यम् । वैवर्ण्यमलिनवसनताऽऽदिहेतुर्दारिद्र्यादेरनौजस्यं दैन्यम् । सन्तापशून्यमनस्त्वादिहेतुरैश्वर्यभ्रंशादिकृता चित्तव्यासक्तिश्चिन्ता । भयव्यसनादिजन्या पतनघूर्णनादिजनिका विचित्तता मोहः । सदृशदर्शनादितो रससमुल्लासादिहेतुर्वासनोद्बोधः स्मृतिः । अभीष्टलाभादिजश्चित्तसन्तोषो वदनविकाशादिहेतुर्धृतिः । असदृशाचरणादितो धाष्र्ट्याभावो भूलिखनावाङ्मुखत्वादिहेतुर्व्रीडा । भर्त्सनादिहेतुरविमृष्यकारित्वं

---

निर्देशक्रमः । "एवं काव्यार्थानूसान् भावयन्ति कुर्वते—स्थायिव्यभिचारिकलापेनैव ह्यास्वाद्यो लौकिकार्थो निगद्यते" । अन्यच्च प्रयोगोचितान्भावानेवाश्रित्यैते वर्तन्त इति ह्यास्नायसिद्धः सम्प्रदायः । एषां भावानां प्रतिरसं विभागो नाट्यशास्त्रे दर्शितः । आस्वेवान्तर्भवन्तीति—यथा निर्वेदव्यतिरिक्तस्य शमस्य निर्वेदान्न पृथग्गणनम् ।

सुप्तं प्रबोधोऽमर्षश्चाप्यवहित्थमथोग्रता ।
मतिर्व्याधिस्तथोन्मादस्तथा मरणमेव च ॥ ३३ ॥

---

मात्सर्यद्वेषादिकं चपलता । बन्धुसङ्गमादिजश्चित्तप्रसादो नयनो-ल्लासपुलकादिहेतुर्हर्षः । विस्मृतिकम्पादिकृतविभवौत्सुक्या-दिजः सम्भ्रम आवेगः । इष्टानिष्टदर्शनश्रवणाद्युत्थाऽप्र-तिपत्तिरनिमेषनेत्रताऽऽदिहेतुर्जडता । लावण्यैश्वर्यादिजः सवि-लासाङ्गवीक्षणादिकृच्चित्तोत्सेको गर्वः । प्रारब्धासिद्ध्यादिजः सहायान्वेषणत्वादिहेतुः सत्त्वभ्रंशो विषादः । सुरतादौ कालक्षेपाक्षमत्वं स्वेदादिकृदौत्सुक्यम् । चिन्ताऽऽदि मनः-सम्मीलनं जृम्भाऽऽदिहेतु निद्रा । चित्तविक्षेपाग्रहावेशदुःखा-दिजोऽपस्मारः(१) । निद्राऽऽलस्यस्वप्नायिताऽऽदिहेतु-र्विषयाननुभूतिः सुप्तम् । निद्राक्षये चेतनाशयः प्रबोधः । अवज्ञाऽऽदेरभिनिविष्टत्वं तर्जनादिकृदमर्षः । व्यापारा-न्तरासङ्गादिकृद् व्रीडादेर्विक्रियागुप्तिरवहित्थम् । चोरादौ चण्डत्वं तर्जनताडनाऽऽदिकृदुग्रता । हर्षावेगादिहेतुः शास्त्रादे-स्तत्त्वज्ञानं मतिः । कामशोकादिजः कम्पस्वेदादिहेतुरन्तःकरणो-परोधो व्याधिः । हर्षशोकाग्रहावेशोत्कण्ठादिजोऽस्थानहसित-गीतरुदितकृच्चित्तसम्मोह उन्मादः । शोकादितो जीवोद्गमारम्भान्त-

---

(१) एवं भारतीये नाट्यशास्त्रे—"अपस्मारो नाम देवयक्षनाग-भूतपिशाचादीनां ग्रहणानुस्मरणोच्छिष्टशून्यागारसेवनाशुचिकाला-न्तरा(?) परिपतनव्याध्यादिभिर्विभावैः समुत्पद्यते" ।

त्रासश्चैव वितर्कश्च विज्ञेया व्यभिचारिणः ।
त्रयस्त्रिंशदमी भावाः समाख्यातास्तु नामतः(१)॥३४॥

निर्वेदस्यामङ्गलप्रायस्य प्रथममनुपादेयत्वेऽप्युपा-

विविधचेष्टाकृन्मरणम् । संभ्रमोत्कण्ठादिहेतुर्गर्वितादेर्मनः-क्षोभस्त्रासः । सन्देहप्रभवो विमर्षः शिरोऽङ्गुल्यादिनर्त्तनकृद्वितर्कः । भावाश्चित्तवृत्तयः—तेन मरणादीनां जीवनपरित्यागरूपता निरस्ता । शेषास्तु चित्तवृत्तयः काश्चिदास्वेवान्तर्भवन्ति, काश्चिदेतासामेव विभावानुभावरूपा इति पृथङ् नोक्ताः । अतएवोक्तं, नामत इति । नामत उद्देशमात्रेणोक्ताः स्वयञ्च विविच्य बोद्धव्या इत्यर्थः । स्थायिताऽभिधानार्थं स्थायित्वसूचनार्थम् । स्थायिनां सन्निकर्षश्रवणक्षणेऽत्रास्तीत्यारम्भादेव(२)रसाल-

(१) भरतनाट्यशास्त्रीयाः कारिकाः । एवमन्यत्र राजानकतिलककृतत्वेन सम्भाव्यमाने औद्भटकाव्यालङ्कारसारसंग्रहोपरि विवरणे वृत्तेः सूत्रार्थस्य सर्वथा संवादे मम्मटभट्टोपज्ञान्येतानीति न दृढो निश्चयः । उभयोरप्येतयोः प्राचीनतराणां वृद्धानां रचनैतानीति मन्यामहे । ।

(२) 'सन्निकर्षश्रपननेऽत्रास्ती'त्यादर्शपुस्तके पाठः । अत्र सान्द्रानन्दमयेत्याद्यंशे पाठो विपर्यस्तः । स्रक्सूत्रन्यायेन नियतावस्थानं स्थायिनां, व्यभिचरिणान्तु फेनबुद्बुदन्यायेनानियतावस्थानमिति स्थिते स्थायिव्यभिचारिणोर्भेदे कस्यापि भावस्य स्थायित्वं व्यभिचारित्वञ्चोभयं नासंवादि यदाहुः "रत्यादयोऽप्यनियते रसे स्युर्व्यभिचारिणः ।" एकत्र चरमक्षणपर्यन्तस्थायित्वे स्थायित्वम्, अन्यत्रोपकर्त्तृत्वदशायामवस्थानात्तत ऊर्ध्वं विलयाद्व्यभिचारित्वमायातम् ।

दानं व्यभिचारित्वेऽपि स्थायिताऽभिधानार्थम् । तेन—

(४७) निर्वेदस्थायिभावोऽस्ति शान्तोऽपि नवमो रसः।

---

यष्टिचर्वणन्यायेन सान्द्रानन्दमयानुविद्धाङ्गचमत्कारो रसः, पानकादौ कर्पूराद्यंशवत् । किञ्चिल्लज्जाऽऽदिप्रयुक्तचमत्कृतित्वे सञ्चारिप्राधान्यं, नीरसप्रायशुष्कनारिकेलचर्वणवत् पर्यन्ते किञ्चिदास्वादे भावमात्रम्—इति स्वसंवेदनमूलानादिसहृदयपरम्परा)-मननप्रसिद्धिकृत एव हि रसभावव्यपदेशविभागः । (१)अहो वेत्यादौ सम्भ्रमः (?) स्वल्पोऽनुभूयते, न चासौ शृङ्गारादिरिति निरवद्यो नवमरसवादः । स्त्रैणं स्त्रीसमूहः । यान्तीति-

---

(१) यद्यपि "न भावहीनोऽस्ति रसो न भावो रसवर्जित"इत्यभियुक्तोक्त्या रसभावयोर्भेदो भाक्त इवापाततः प्रतीयते, यद्यपि च 'नानाऽभिनयसम्बन्धान्भावयन्ति रसानिमान् । यस्मात्तस्मादमी भावा विज्ञेया नाट्ययोक्तृभि'रिति मुनिवचनाद्भाव्यभावकसम्बन्धोऽप्यनयोः शास्त्रसिद्धस्तथाऽपि पर्यन्ते भेदोऽनुभवसिद्ध एव । शास्त्रञ्चैतदनुकूलमप्युपलभ्यते—"विभावैरनुभावैश्च सात्त्विकैर्व्यभिचारिभिः । आनीयमानः स्वादुत्वं स्थायिभावो रसः स्मृतः" इति । रसस्य व्यभिचारिभाववैलक्षण्यं स्पष्टम् । "अलौकिकविभावादिव्यपदेशभाग्भिः...गुणप्रधानतात्पर्याश्रयेण सामाजिकधियि सम्यग्योगं सम्बन्धमैकाग्र्यं वाऽऽसादित अन्द्रिरलौकिकनिर्विघ्नसंवेदनात्मकचर्वणागोचरतां नीतोऽर्थश्चर्व्यमाणतैकसारो न तु सिद्धस्वभावस्तात्कालिक एव न तु चर्वणातिरिक्तकालावलम्बी......स्थायिविलक्षण एव रस"इत्यभिनवगुप्ताचार्याः ।

यथा —

अहौ वा हारे वा कुसुमशयने वा दृषदि वा
मणौ वा लोष्ट्रे(१) वा बलवति रिपौ वा सुहृदि वा ।
तृणे वा स्त्रैणे वा मम समदृशो यान्ति दिवसाः
क्वचित्पुण्यारण्ये (२)शिव शिव शिवेति प्रलपतः ॥४४॥

'कदाकर्णोर्विभावये'ति भविष्यति वर्त्तमाना । (३) निर्वेदस्थायी· ति — चिरन्तनदिशा । वस्तुतस्तु निरीहावस्थायामानन्दोत्तररूपः शम एवास्य स्थायी, निर्वेदस्तु सञ्चार्येव, तस्य स्वावमतिमात्र· त्वात् विषयानां प्रत्ययमात्रत्वाद्वा (?) शान्तेषु सुखातिशयरूपत्वात् । तदुक्तम् —

यच्च कामसुखं लोके यच्च दिव्यं महत्सुखम् ।
तृष्णाक्षयसुखस्यैते नार्हतः षोडशीं कलाम्(४)॥ इति ।

अत्र चानित्यताऽऽदिना सर्वजगन्निःसारताभावने परमार्थ· स्वरूपमालम्बनं,पुण्यतीर्थादय उद्दीपनं,पुलकादयोऽनुभावाः,हर्षा· दयः सञ्चारिणः । तस्य बीभत्सेऽन्तर्भावस्तु नोचितः, तत्र विषयजुगुप्सायाः(५) प्राधान्यात् । दयावीरदेवतरत्यादीनान्तु

(१) 'लोष्टे'ति प्रायो दाक्षिणात्यानां पुस्तकेषु पाठः ।

(२) 'पुण्येऽरण्ये' इति वा पाठः ।

(३) वर्त्तमानेति कलापव्याकरणे लटः पर्यायरूपा. क्रियाविभक्तिः।

(४) महाभारते शान्तिपर्वीये मोक्षधर्मप्रकरण इत्याकरनिरा· करणं कुत्रापि ।

(५) विषयमात्रजुगुप्सा शान्तरसे, विषयविशेषजुगुप्सा बीभत्स इति स्फुटोऽनयोर्भेदः ।

(४८) रतिर्देवादिविषया व्यभिचारी तथाऽञ्जित: ॥३५॥
भाव: प्रोक्त:—

साहङ्कारदशायामत्र नान्तर्भावः। नचायं सर्वजनावेद्यतया न रसः, शृङ्गारादीनामपि शुकादीनामवश्यत्वात्। तस्माद्विलक्षण एवायं नवमो रस इति सन्तोष्टव्यम्।

रतिर्देवादिविषयेति—परस्परावस्थाऽनुरूपपरिपोषबीजाभावान्न रसः। अन्यासङ्गेनात्यन्तपोषे तु देवतरतेः शान्तावन्तर्भाव (१) इत्युक्तप्रायं सर्वमिति। न च नायिकाविषयेऽपि रतेः क्वचित्तावन्मात्रताऽस्तु(१) यथा 'स्तुमः क'मित्यादौ। तत्र हि प्रकरणपर्यालोचनयाऽन्योन्यजीवितसर्वस्वताविरहान्न रसता। विषयानौचित्यादिविरहाच्च नाभासः। एवं हासादीनामप्यपुष्टौ भावमात्रता भावुकैर्बोद्धव्या(२)। तत्रापि च वासनोद्बोधरूपत्वं समूहालम्बनात्मकत्वञ्च पूर्वप्रक्रियाऽनुसारेण ज्ञेयम्। स्वरूपमात्रभेदेन हि रसभावव्यपदेश इत्युक्तम्। व्यभिचारीति—कनकधूपामोदादौ मङ्गल्यादिभाग इव किञ्चिदाक्रान्त इव चमत्कृतिजीवातुत्वेन भावकैरपोह्य क्रिय-

---

(१) शान्तेऽन्तर्भाव इति वरम्, शान्तिपदेन पारिभाषिकतया तस्य रसस्याग्रहात्।

(२) 'क्वचित्तावन्मात्रताथावस्त्वित्यादा'वित्यशुद्धः पाठ आदर्शपुस्तके। एतदुत्तरवाक्ये तत्रेति पदेन देवादिविषयाया रतेः परामर्शो यथा "अहो वा हारे वे" त्यादौ लक्ष्ये।

आदिशब्दान्मुनि-गुरु-नृप-पुत्रादिविषया । कान्ता-विषया तु व्यक्ता शृङ्गारः ।

उदाहरणम्—

कण्ठकोणविनिविष्टमीश ते कालकूटमपि मे महाऽमृतम् ।
अप्युपात्तममृतं भवद्वपुर्भेदवृत्ति यदि मे न रोचते ॥४५॥

हरत्यघं संप्रति हेतुरेष्यतः
शुभस्य पूर्वाचरितैः कृतं शुभैः ।
शरीरभाजां भवदीयदर्शनं
व्यनक्ति कालत्रितयेऽपि योग्यताम् ॥ ४६ ॥

माणं इत्यर्थः । तथा चार्थे कान्ताविषया जीवितसर्वस्वाधिकतर-त्वाभिमतनायिकाविषया दत्तस्त्रीमात्रविषया वा । व्यक्ता सामग्री माहात्म्येन प्राप्तप्रकर्षा । व्यक्त इति क्वचन पाठः । योग्यता माहात्म्यम् । एवमन्यदिति—गुरुषु त्रिकलिङ्गेन्द्रदेवश्री-नृसिंहदेवस्य कविराजश्रीमदुल्लासदासपादेष्व-(२) स्माकं

(१) "रतिर्देवादिविषये"ति कारिकायां रतिपदमुपलक्षणम् । रतिहासादीनां सर्वेषामेव स्थायिभावानां तेन ग्रहणम् । परमपुष्टाना-मप्राप्तरसावस्थानामेव भावपदेन व्यवहारः ।

(२) ओड्रपतिर्महनीयमहिमा प्रथमो द्वितीयो वा नरसिंहदेवोऽत्र समुद्दिष्टः । कविराजपदलाञ्छनः श्रीमदुल्लासदासश्चण्डीदासपितु-र्विलासदासस्याग्रजः । असौ राजगुरुरासीत्, न केवलं पुनस्तदधस्तन-चन्द्रशेखरविश्वनाथमहापात्रादिवत्सान्धिविग्रहिको राजकर्मचारी । महती तस्मिंस्त्रिकलिङ्गदेवस्यास्थेति तद्रचिताद्रुपर्युक्तश्लोकादनुमीयते ।

एवमन्यदप्युदाहार्यम्। व्यभिचारी(१) यथा-
जाने कोपपराङ्मुखी प्रियतमा स्वप्नेऽद्य दृष्टा मया
मा मां संस्पृश पाणिनेति रुदती गन्तुं प्रवृत्ता पुरः।
नो यावत्परिरभ्य चाटुशतकैराश्वासयामि प्रियां
भ्रातस्तावदहं शठेन विधिना निद्रादरिद्रीकृतः॥ ४७
अत्र विधिं प्रत्यसूया।

( ४९ )-तदाभासा अनौचित्यप्रवर्त्तिताः।

तदाभासा रसाभासा भावाभासाश्च।

तत्र रसाभासो यथा—
स्तुमः कं वामाक्षि! क्षणमपि विना यं न रमसे
विलेभे कः प्राणान् रणमखमुखे यं मृगयसे।

---

ज्येष्ठतातेषु यथा--
पाटवं वचसि तावकं स्मरंस्त्वां विहास्यति सचेतनो हि कः।
पिञ्जरे सुखनियन्त्रितो वसन् राजकीर ननु मा स्म गाः शुचम्॥

जाने इति--तत्रास्वादकाले विवेक्तुमशक्यत्वेऽपि पश्चाद्न्वयव्यतिरेकाभ्यामसूयाप्राधान्यं व्यवस्थाप्यत [ इति ] तत्त्वम्। अत्रेति-नतु [ रतिः ], विविक्ततायाः एवात्र वर्णीयत्वात्। अनौचित्यं लोकशास्त्रातिक्रमः। एतच्च शृङ्गारादिलक्षणैकदेशायोगोपलक्षणपरम्। तेनाधमपात्रतिर्यगादेरवबोधः। अत्रानेकेति-

---

( १ ) एवं प्राच्यटीकाकृतां ग्रन्थेषु पाठः। 'अञ्जितव्यभिचारी'ति त्वन्येषां पाठः।

सुलभे को जातः शशिमुखि ! यमालिङ्गसि बलात्
तपःश्रीः कस्यैषा मदननगरि ! ध्यायसि तु यम् ॥४८॥

अत्रानेककामुकविषयमभिलाषं तस्याः स्तुम इत्या-
द्यनुगतं बहुव्यापारोपादानं व्यनक्ति ।

भावाभासो यथा—

राकासुधाकरमुखी तरलायताक्षी
सा स्मेरयौवनतरङ्गितविभ्रमास्या ।

---

यमित्यसकृत्कर्मनिर्देश एकविषयः । स च प्रसङ्गतः प्रकरणसाचि-
व्येन सोपहासोत्प्रासकाकुत्वबलेन स्तुम इत्यादीनां स्तुतिप्राधान्यं
निरस्य खण्डास्वादरूपां रसाभासव्यक्तोराविष्कृत्य पर्यन्ते हास्यं
परिपोषयति । सोपहासकाकुविरहे तु वह्वा काका तद्गतां रतिं
व्यनक्तीत्यर्थः(१) । प्रसङ्गानुक्ते रसाभासो रसकाव्येषु वा
द्रष्टव्यः । नह्यस्ति रससामग्री(१)–तदुक्तं(२)–'शृङ्गारोऽनुक्त-

---

( १ ) स्तुम इति कामपि वारयोषितं प्रति कस्यचित्कामुकस्य
चाटूक्तिः। प्रतिपादं यत्पदेन भिन्नकामुकसम्बन्धो भोगलालसाघटितः
सोत्प्रासकाकुबलेन व्यज्यते । यदि पुनः सरलैषा सम्भावना सद्भाव-
प्रतिपन्नकुलललनाचक्रचरितां सरणिं नातिशेते तदा यमित्यादि
प्रतिपादं स्थितैरवान्तरवाक्यैरेक एव काष्ठाऽऽरूढप्रीतिपात्रभूतो दयितः
परामृश्येत । तथात्वे न किमप्यनौचित्यम्, अतो रसकक्ष्यायामस्य
पद्यस्यान्तर्भावः सुशक इति हि टीकाकृतामाशयः ।

( २ ) रुद्रटीये (१४।३६) स्थितः "शृङ्गाराभासः स तु यत्र विरक्तो-
ऽपि जायते रक्तः" इति सन्दर्भष्टीकाकृतोद्धृतः स्यात् । लेखकत्रुटि-

तत्किं करोमि विदधे कथमत्र मैत्रीं
तत्स्वीकृतिव्यतिकरे क इवाभ्युपायः ॥ ४९ ॥

अत्र चिन्ता अनौचित्यप्रवर्तिता। एवमन्येऽप्युदाहार्याः।

(५०)भावस्य शान्तिरुदयः सन्धिः शवलता तथा ॥

---

(हृ)तः, तु यत्राव्यक्तोऽपि जायते व्यक्त' इति। राका अखण्ड-पूर्णिमा। तरङ्गिता विभ्रमा यत्र तरङ्गितविभ्रमं, तथाभूतमास्यं (१)यस्या इति विग्रहः। तस्याः स्वीकृतिः स्वाधीनकरणं तस्य व्यतिकरः सदातनतारूपं पौनःपुन्यम्। अत्रेति—अभियोग्या-वैमुख्यदर्शिनो दुर्भगस्येयमुक्तिः प्रकरणादवसेयेति भावः। एवं हास्यादिरसानां लज्जाऽऽदिभावानाञ्चाभासा आकरेषु स्वयं बोद्धव्या इत्याह—एवमन्येऽपीति।

भावस्य सञ्चारिणो लौकिकदशायामुदयव्ययशालिनः क्वचिद्विरुद्धसामग्रीप्राधान्येन प्रशमावस्था स्वदते, क्वचित्स्वसामग्रीमाहात्म्येनोदयावस्था, क्वचनोभयसामग्रीयोगेन परस्परविमर्दः, क्वचन पुनः पूर्वपूर्वविमर्देनोत्तरोत्तरोदयपरम्परा। रत्यादेस्तु सतत-

---

वशाद्विपर्यासमापन्नः सः। 'शृङ्गारोऽनुकृत" इति प्रथमपदस्य चण्डीदासानुमतः पाठः स्यात्।

(१) 'विभ्रमा स्यात्' 'विभ्रमाङ्गा' 'विभमाङ्गी'ति इति चात्र-टीकाऽन्तरेषु धृतपाठान्तराणि।

क्लेशेनोदाहरणम्—

तस्याः सान्द्रविलेपनस्तनतटप्रश्लेषमुद्राऽङ्कितं
किं वक्षश्चरणानतिव्यतिकरव्याजेन गोपाय्यते ।
इत्युक्ते क्व तदित्युदीर्य सहसा तत्संप्रमार्ष्टुं मया
साऽऽश्लिष्टा रभसेन तत्सुखवशात्तन्व्या च(१)तद्विस्मृतम्

अत्र कोपस्य ।

एकस्मिन् शयने विपक्षरमणीनामग्रहे मुग्धया
सद्यो मानपरिग्रहग्लपितया चाटूनि कुर्वन्नपि ।
आवेगादवधीरितः प्रियतमस्तूष्णीं स्थितस्तत्क्षणं(२)
मा भूत्सुप्त इवेत्यमन्दवलितग्रीवं पुनर्वीक्षितः ॥ ५१

अत्रौत्सुक्यस्य ।

उत्सिक्तस्य तपःपराक्रमनिधेरभ्यागमादेकतः
सत्सङ्गप्रियता च वीररभसोत्फालश्च मां कर्षतः ।

---

मविच्छेदिनो नेदं वैचित्र्यम् । तस्या इति—अत्रेर्ष्यारोषस्य परिरम्भसुखजनितजडिमनिमज्जनरूपप्रशम एव काव्ये सर्वस्वम् । एकस्मिन्निति—अत्र क्रोधवेगेन तिरस्कृतस्याप्यौत्सुक्यस्य पुनः [सन्दर्शनादुन्मेषं] (३) एव चर्वणाबीजम् । उत्सिक्तस्य सत्वो-

---

(१) 'सत्सुखवशात्' 'तन्व्याऽपी'ति चात्र चरणे पाठान्तरे ।

(२) 'तत्क्षणा'दिति वा पाठः ।

(३) 'सन्दर्शनादुन्मेष' इत्यंश आदर्शपुस्तके न पूरितः । मूलपुस्तकस्य जीर्णतयाऽस्यांशस्य पूरणं न साधितं गौडीयलिप्यां लिपिकरेण ।

वैदेहीपरिरम्भ एव च मुहुश्चैतन्यमामीलय-
न्नानन्दी हरिचन्दनेन्दुशिशिरः स्निग्धो रुणद्ध्यन्यतः ॥५२

अत्रावेगहर्षयोः ।

क्वाकार्यं शशलक्ष्मणः क्व च कुलं भूयोऽपि दृश्येत सा
दोषाणां प्रशमाय नः श्रुतमहो कोपेऽपि कान्तं मुखम् ।

---

त्कर्षवशाज्जगत्तृणाय मन्यमानस्य वीरतया रभसोत्फाल उत्साह-
वेगेनाहङ्कारसमुद्गमप्रकर्षः । अत्रावेगहर्षयोरिति —खण्डयोर्वीर-
शृङ्गारयोरङ्गतामापन्नयोरितरेतरविरुद्धयोः (१)सञ्चारिणोः स-
न्धिः । वस्तुतो ह्येवंविधे यथाङ्गानुद्रेकस्तदा खण्डौ वीरशृङ्गारौ(२),
विलक्षण एव वा चित्रनामा रसः, न तु पूर्णः शृङ्गारो वीरो
वा । क्वाकार्यमित्यनुशयदेवयानीनाटके ययातेरिति प्रवादः ।

---

(१) अत्रापि पूर्ववदितरेतरविरुद्धयो'रित्यंशस्त्रुटितः ।

(२) एषा संज्ञाद्वयी श्रीचण्डीदासोपज्ञा स्यात् । प्राच्यानां पुनः केषाञ्चिदत्र सञ्चारिरसनाम्ना व्यपदेशः । यदाहुर्दर्पणकृतः स्वग्रन्थे "अतएवात्र प्रधानेतरेषु रसेषु स्वातन्त्र्यविश्रामराहित्यात्पूर्णरसभाव-मात्राच्च विलक्षणतया सञ्चारिरसनाम्ना व्यपदेशः प्राच्यानाम्। अस्म-त्पितामहानुजकविपण्डितमुख्यश्रीचण्डीदासपादानान्तु खण्डरस-नाम्ना । यदाहुः "अङ्गं बाध्योऽथ संसर्गी यद्यङ्गी स्याद्रसान्तरे । नास्वाद्यते समग्रं यत्ततः खण्डरसः स्मृतः ॥" इति । श्लोकोऽयं ध्वनिसिद्धान्तसंग्रहीय इत्यनुमीयते ।

किं वक्ष्यन्त्यपकल्मषाः कृतधियः स्वप्नेऽपि सा दुर्लभा
चेतः स्वास्थ्यमुपैहि कः खलु युवा धन्योऽधरं धास्यति ॥ ५३ ॥

अत्र वितर्कौत्सुक्यमतिस्मरणशङ्कादैन्यधृतिचिन्ता-
नां शबलता। भावस्थितिस्तूक्तोदाहृता च।

## ( ५१ ) मुख्ये रसेऽपि तेऽङ्गित्वं प्राप्नुवन्ति कदाचन ॥

अत्र(१) वितर्कादीनां चिन्तापर्यन्तानां व्यञ्जकभागाः स्पष्टाः।
भाव[स्य] स्थितिरुदयव्ययवैशिष्ट्यरहितं स्वरूपं, न तु तद्वि-
लक्षणा काचिदिति भावः।

रस्यते रसीक्रियते इति रसो रत्यादिः। यद्यपि पात्रा-
पेक्षायामत्रान्योऽङ्गी तथाऽपि तदङ्गानामास्वादजीवातुतया काव्ये

---

(१) अत्र विवेककृतष्टिप्पणं हासमेव जनयतीत्यामूलमुद्ध्रियते–"अयं श्लोकः कस्यचित्कवेः क्वचिन्नाटकादौ कण्वाश्रमे शकुन्तलां दृष्ट्वा तां प्रति प्रवृद्धाभिलाषस्य दुष्यन्तस्य तस्यां ब्राह्मणीत्वमाशङ्कमानस्यो-क्तिः, अनुशयदेवयानीनामनि नाटके वा ययातेरिति प्रवादः।" अस्या-सगृहीताभिज्ञानशकुन्तलग्रन्थस्य कविपण्डितस्य चण्डीदासस्य मुख्येतरकल्पेऽनयोरुक्तिरिति सुसिद्धमेव। विक्रमोर्वशीये चतुर्थेऽङ्के उन्मत्तस्य पुरूरवस उक्तिरिति जयन्तभट्टादयोऽनेके प्राचीना अर्वाचीना-श्च टीकाकृतः। श्रीवत्सलाञ्छनकमलाकरभट्टवैद्यनाथादयश्चण्डीदास मतमेवानुसरन्ति। अस्मिन्नेव व्याख्यानेऽकार्यं ब्राह्मणकन्यायामास-क्तिरूपं भयं संवदति। विक्रमोर्वशीयचतुर्थाङ्कग्रन्थविषये महती वि-प्रतिपत्तिर्विदुषां, न चास्य श्लोकस्य भूयस्तरेष्वादर्शपुस्तकेषु तस्यो-पलम्भः। अतोऽगतिकगत्या उपर्युक्तमेव साधु स्यात्।

ते भावशान्त्यादयः। अङ्गित्वं राजानुगतविवाहप्रवृत्तभृत्यवत्।

(५२) अनुस्वानाभसंलक्ष्यक्रमव्यङ्ग्यस्थितिस्तु यः॥
शब्दार्थोभयशक्त्युत्थस्त्रिधा स कथितो ध्वनिः।

शब्दशक्तिमूलानुरूपव्यङ्ग्यः अर्थशक्तिमूलानुरूपव्यङ्ग्यः उभयशक्तिमूलानुरूपव्यङ्ग्यश्चेति त्रिविधः।

---

क्वचनाङ्गित्वं प्राधान्यम्। इतरे तु तन्मुखप्रेक्षिणो यथोक्तास्तत्रोदाहृतिषु। भावशान्त्यादय इति–भावा व्यभिचारिणस्तेषां प्रशान्त्यादयश्चेति ज्ञेयम्। राजेति–भृत्यविवाहे राजगमनं हि भृत्यस्यैवोपकरणतां धत्ते।

एवमलक्ष्यक्रमं रसादिस्वरूपं निरूप्य सम्प्रति लक्ष्यक्रमस्य सामान्यानुवादेन विभागमाह—अन्विति। अनु पश्चात्स्वानः कथनं यस्य सोऽनुस्वानस्तदाभस्तत्सदृशः, अतएव सम्यक्लक्ष्यक्रमं प्रतीतिपौर्वापर्यं यत्र व्यङ्ग्ये तत्र स्थितिर्यत्रेति विग्रहः। शब्दस्यार्थस्य तदुभयस्य शक्तेरुद्भवतीति शब्दार्थोभयशक्त्युत्थः। शब्दस्य शक्तिर्मूलं प्रतीतिप्रधानबीजं यस्य स शब्दशक्तिमूलः। तथाभूतोऽनुरणनरूपोऽनुदितसदृशो व्यङ्ग्योऽर्थो यत्रेत्यादिर्विग्रहः कार्यः।

तत्र—

( ५३ ) अलङ्कारोऽथ वस्त्वेव शब्दाद्यत्रावभासते ।
प्रधानत्वेन स ज्ञेयः शब्दशक्त्युद्भवो द्विधा ॥

वस्त्वेवेति अनलङ्कारवस्तुमात्रम् ।

उल्लास्य कालकरवालमहाम्बुवाहं
देवेन येन जरठोर्जितगर्जितेन ।

---

अथ विकल्पे । प्रधानत्वेनेति—काकनयनन्यायेन—शब्दात् अवभासत(१) इति पदाभ्यां सम्बध्यते । प्रधानत्वेनोत्कट-तया शब्दाच्छब्दशक्तेरवभासते, अर्थस्य साचिव्यमात्रम् । प्रधानत्वेनावभासत इति गुणीभावनिरासः । शब्दशक्त्यु-द्भवं व्यङ्ग्यं विद्यत अत्र काव्य इति अर्शआदित्वादच्(२) । एवमुत्तरत्रापि । मात्रमित्येवार्थः । तद्व्यवच्छेद्यकथनमनलङ्का-रमिति । अलङ्कृतिरलङ्कार इति भावे घञ् । न विद्यतेऽलङ्कारो ऽलङ्कारकृत्यमस्येत्यनलङ्कारम् । उल्लास्येति-कालः शत्रुसंहर्ता करवालः खड्गः स एव महाम्बु धाराजलं वहतीति महाम्बु-वाहः । करवाल एव महाम्बुनो धाराजलस्य वाहः वहनं प्रसरणं

---

(१) 'वभासत इति पदाभ्या'मित्यादर्शपुस्तके मूलोच्छेदपरः पाठः। अस्य 'अनेकार्थस्य शब्दस्ये'त्यादिकारिकया (६७ पृ०') द्वितीयोल्ला-सस्थया लक्ष्यसूचनम्। प्रदीपकृता 'एतेन अभिधाया' इत्यादौ 'यत्के-नचिदुक्तं तन्नादेय'मित्यन्ते ग्रन्थे यत्कटाक्षितं तत् श्रीधरचण्डीदासा-दिमताक्षेपपरं नेति मन्यव्यम् ।

(२) ध्वनिरिति पूर्वकारिकया निर्दिष्टस्य लक्ष्यस्य विभजनपर एवैतदुत्तरो भूयान् ग्रन्थ इति तात्पर्यम् ।

निर्वापितः सकल एव रणे रिपूणां
धाराजलैस्त्रिजगति ज्वलितः प्रतापः ॥५४

---

कम्फिण- (१) नृपतिपक्षे पक्षान्तरे तु कालकरः कृष्णकान्तिः, बालः प्रत्यग्र इति श्रीधरः कष्टं मृष्टवान् (२) । वस्तुतस्तु (३) रूपक उपमा-समास एव । न च स्फुटीभावान्नेदं ध्वनिः स्यादिति वाच्यं, यत्र हि अस्फुटसादृश्यभागिनि (४) रूपणं वाच्यं तत्रैकदेशान्तररूपणं विना

---

(१) कम्फिणाभ्युदयकाव्यस्य ( ) श्लोक एषः । कम्फिणेति प्रकृतस्य नायकस्य नाम्नि इकारयुक्तः पाठ उत्कलीयेषु दाक्षिणात्येषु च पुस्तकेषु दृश्यते । एवमपि सर्वानन्दकृतटीकासर्वस्वे । अर्वाचीनैष्टीकाकृद्भिर्गोविन्दादि-भिर्नेदं शिवस्वामिकृतं काव्यं दृष्टमित्यनुमीयते ।

(२) 'करवाले यन्महदम्बु विपुलं धाराजलं तस्य वाहं प्रवाहमुल्लास्ये'ति पाठः श्रीधरकृतटीकायामुपलभ्यते । साहित्यचूडामणौ (T.S.S.,LXXXV-III. P. 153 ) भट्टगोपालेनेयं व्याख्यानशैली सयाधेत्युदङ्कितम् । यद्यप्यर्वाची-नैरपि कैश्चिट्टीकाकृद्भिः श्रीधरमतमनुसृतं तथापि कष्टसृष्टिरियमवस्तूत्थापितेति न महती विप्रतिपत्तिरिति चण्डीदासोक्तं साधीयः । एवं सभङ्गश्लेषपक्षमुररीकृत्य निर्बन्धवद्भिर्गोविन्दादिभिर्यत् 'मह उत्सवः स एवाम्बु' इत्यादि वैकल्पिकं व्याख्यानं कृतं तदप्यतिप्रासङ्गिकम् ।

(३) 'सादृश्यं भागिनिरूपण' मित्यशुद्धः पाठ आदर्शपुस्तके ।

(४) अत्र पाठो न सम्यङ् इति प्रतिभाति । परं 'करवालस्याम्बुवाहेति रूपणमिति रूपकेणैव तत्कार्यस्य सिद्धत्वान्नोपमाध्वनेरिदमुदाहरण' मिति पर-मतस्य व्युदासे यत् श्रीधरेण चेष्टितं तत्र वन्ध्ययत्नत्वं तस्येति प्रकटयितुमेव टीकाकृतः साटोपं विजृम्भितमित्युत्तरग्रन्थतोऽवगम्यते । वृत्तिकारस्वरसोऽपि न विघ्नित इति च टीकाकृतामाशयः ।

अत्र वाक्यस्यासम्बद्धार्थाभिधायकत्वं मा प्रसाङ्क्षीदिति प्राकरणिकाप्राकरणिकयोरुपमानोपमेयभावः कल्पनीय इत्यत्रोपमाऽलङ्कारो व्यङ्ग्यः ।

---

तदसङ्गतं स्यादिति तस्याक्षेपः स्फुटः—यथा जन्तुद्भुजगजं विषमिति । खड्गमेघयोस्तु सादृश्यं व्यक्ततया न परसाचिव्यमपेक्षते, ततश्च स्वमात्रविश्रान्तमिति न रूपणान्तराक्षेपः । देवः प्रभुर्मेघाधिकारी च । धाराजलं धारायाः स्वच्छकान्तिः धाराऽऽकारं जलञ्च । अत्रेति तन्त्रन्यायेन (१) तादृशमुच्चारणं, पदार्थद्वयाभिधायकशब्दप्रतीतेः । प्रतिप्रसवन्यायेन वा कल्पितस्य द्वितीयशब्दस्य द्वितीयार्थोऽभिधेयः । तस्य चासम्बन्धभीत्या उपमाऽऽख्यः सम्बन्धः कल्प्यते (२) । स एव मुख्यतो व्यङ्ग्यः । अर्थान्तरे तु तद्विशिष्टतया व्यङ्ग्यताव्यवहारमात्रमिति केचित् । अत्र व्यङ्ग्योपमावैशिष्ट्येन व्यङ्ग्यव्यवहारः प्रकृतेऽपि न दण्डवारितः । असम्बन्धभीरुणा चोपमैव कल्पनीयेति किमियं (३) राजाज्ञा,

---

(१) कर्मणां यौगपद्यभावस्तन्त्रमिति हि तन्त्रन्यायोद्घोषणम् । 'तन्त्रं कुटुम्बकृत्ये स्यादि'त्याद्यारभ्य 'श्रुतिशाखाऽन्तरे हेतावुभयार्थप्रयोजक' इति तन्त्रस्यार्थनिर्देशपरान्मेदिनीकोशग्रन्थादुभयार्थप्रयोजकताबीजभूतोऽयं न्यायः उ यस्य प्रकृतशाखानुसारी विमर्शः 'अर्थभेदेन शब्दभेद' इति दर्शनमूलः प्रतिप्रसवन्यायः । पक्षद्वयमपि नात्र प्रसक्तं यथा तथा द्वितीयोल्लास एव 'भद्रात्मन' इत्यादि श्लोकप्रसङ्गे (७२-७३ पृः) निरणायि ।

(२) एवमादर्शपुस्तके । अत्र तच्छब्देन टीकास्थपूर्ववाक्यीयशब्दशक्तेः परामर्शः । स च वाक्यार्थमीमांसकैः कथमपि सोढव्यः ।

(३) 'अभीष्टसिद्धावपि खण्डनानामखण्डि राज्ञामपि नैवभाज्ञेति' (Reprint from the *Pandit* Page 139) खण्डन-खण्ड-खाद्यकृतां रीतिमनुसरतां टीकाकृतामियं वचोभङ्गिः ।

तिग्मरुचिरप्रतापो विधुरनिशाकृद्विभो मधुरलीलः ।
मतिमानतत्त्ववृत्तिः प्रतिपदपक्षाग्रणीर्विभाति भवान् ॥ ४५

---

उपमैव तत्र प्रतिभासत इति, किमिति तर्हि कल्पना, उपमैव तत्रा-स्तीति वरम्। यथा चार्थान्तरस्य नाभिधेयत्वं तथोक्तमेवास्माभिः । तस्माद्व्यङ्ग्य एव द्वितीयोऽर्थः—अत्र च शब्दशक्तिरेव । वाक्य-स्येति—तदुत्थापितेऽलङ्कारेऽपि तस्या एव प्राधान्यं, नृपतिपर्यायाच्च [देवशब्दात्] सादृश्यमात्रं प्रतीयते, नाभेद इति न रूपकध्वनिव्यवहारः। वृत्तिस्तु (१) रूपकध्वन्यङ्गीकारेऽसम्बद्धः प्रकृतेऽसङ्गतो योऽर्थः अभेदा-वगमलक्षणः तदभिधायकत्वं तद्बोधकत्वमतिप्रसञ्जकं मा प्रसाङ्क्षीत् नात्र प्रसञ्जनीयं भवतीति प्राकरणिकाप्राकरणिकयो'नृपतिमहेन्द्रयोरुप-मानोपमेयभावः सादृश्यमात्ररूपः कल्पनीयो निर्णयनीय इति । अत्रेति-काव्ये उपमाऽलङ्कारो व्यवहर्त्तव्य इति शेषः ।

तिग्मः शत्रुषु, रुचिरो मनोहरः स्वजनेषु, प्रतापो दण्डादिजनितं तेजो यस्य । विधुराणां [निशाकृत्] निशा मोहान्धकारस्तं कृन्ततीति । विभो स्वामिन् । मधुरलीलः, न च मलिनचेष्टः । मतिस्तत्त्ववित्तिः, मानश्चित्तोन्नतिः (२), तयोस्तत्त्वेन सारेण वृत्तिर्यस्येति । प्रतिपदं पक्षाणां महायानामग्रणीः । तिग्मरुचिः सूर्यः अप्रतापः शीतलप्रायः, विधुश्चन्द्रो न निशाकृत् विभो विगतप्रभः, मधुरलीलो रमणीयचेष्टः मधुर्वसन्तः अलीलः युवजनविविधचेष्टारहितः—इत्येके । मतिमान् अतत्त्वेऽवस्तुनि प्रवर्त्तते । प्रतिपत् पक्षस्याग्रणीः प्रथमतिथिर्न। अत्रेति—द्विपदत्वेऽभिधेये

---

(१) वृत्तेर्व्याख्यानं टीकाकृत्कृतविवरणमिति यावत् ।

(२) 'मानोऽपचितोन्नति'रित्यादर्शपुस्तके पाठः । 'पूजा नमस्याऽपचितिः सपर्या-ऽर्चाऽर्हणाः समा' इत्यभिधानबलादपपूर्वाच्चिनोतेरर्चापरत्वेऽपचितपदे-मार्चार्हायां ग्रहणे स कथमपि स्यात् ।

अत्रैकैकस्य पदस्य द्विपदत्वे विरोधाभासः ।

अमितः समितः प्राप्तैरुत्कर्षैर्हर्षद ! प्रभो !
अहितः सहितः साधुयशोभिरसतामसि ॥ ५६

अत्रापि विरोधाभासः ।

---

विरोधाभास एकैकस्य पदस्य व्यङ्ग्य इति योजना । ननु द्विपदत्वेऽप्रतीत इति, तत्कारणाभावात् (१) । अर्थान्तरप्रतीतिरेव कारणमिति चेन्न, परस्पराश्रयप्रसङ्गात् वैयर्थ्याच्च । एवमन्यत्राप्येवंविधस्थले मृग्यम् (२) ।

समितः संग्रामात्प्राप्तैरुत्कर्षैरमितः पारिमित्यरहितः । यशोभिः सहितो युक्तः, असतामहितः श्रेयश्छेत्ता । मितं मानं, तेन हीनोऽमितः । अहितो हितेन रहितो हिनसहित इति विरोधः । अत्रापीति— विरोधस्याभासताप्रतीतिः । पूर्वोक्तरीतिरत्रापि प्रतिपत्तव्या ।

---

(१) अत्र राजपक्षे मतिपदेन तत्त्वज्ञानस्य मानपदेन चित्तोन्नतेर्निशापदेन च 'या निशा सर्वभूताना'मित्यादाविव मोहान्धकारस्य लाभे यत्किञ्चिच्छास्त्र-परिभाषितस्वरूपाप्रतीताभिधस्य दोषस्य शङ्का न कार्येति टीकाकृतामाशया-विष्करणम् । यदि तावन्मतिपदेन बुद्धिसामान्यस्य, मानपदेन प्रमाणस्य, निशापदेन लक्षणया मरणस्य ग्रहणमभ्युपेयेत यथा यथास्थलमत्र माणिक्यचन्द्र-श्रीधर-श्रीविद्याचक्रवर्त्तिप्रभृतिभिर्दर्शितं तदा नैषा शङ्का साव-काशा भवतीत्यलं पल्लवितेन ।

(२) उत्तरत्राप्युदाहरणचक्र एतदतिरिक्तानां नेयार्थनिहतार्थासमर्थप्रभृतीनां पददोषाणां चण्डीदासप्रदर्शितरीत्या संभव इति युक्तमुक्तम् 'एवमन्य-त्रापी'ति । वस्तुतस्तु 'सहृदयानां वासनाबलाद् द्विपदत्वज्ञानेऽपि········ अप्रकृततया द्वितीयार्थस्य व्यङ्ग्यत्वमक्षत'मित्युद्द्योतकाराणां विवरणं नासारवत् ।

निरुपादानसंभारमभित्तावेव तन्वते ।
जगच्चित्रं नमस्तस्मै कलाश्लाघ्याय शूलिने ॥ ५७

अत्र व्यतिरेकः ।

अलङ्कार्यस्यापि ब्राह्मणश्रमणन्यायेनालङ्कारता ।

---

उपादानसम्भार उपकरणसञ्चयः । चित्रं नानाकारमालेख्यञ्च । अत्र निखिलशिल्पिभ्य उत्कर्षः प्रतीयते । स एव व्यतिरेचनमुत्कर्षणमिति व्युत्पत्त्या व्यतिरेक उच्यते । अत्र विरोधन-व्यतिरेचनमात्रस्यैव हृदयङ्गमत्वं युक्तं, न तु विरोधिव्यतिरेक्यादीनामित्यलङ्करणांशमात्रस्य प्राधान्यं सर्वत्रैवालङ्कृतिध्वनौ मन्तव्यम् । ननु अलङ्क्रियते कश्चित्प्रधानभूतोऽर्थोऽनेनेति अलङ्कारपदार्थपर्यालोचनयैव तस्यार्थप्राधान्यमवसीयते । नचाप्रधानं व्यङ्ग्यमुपधाय ध्वनिव्यपदेश इत्याह—अलङ्कार्यस्येति—वाच्यापेक्षया मुख्यस्येत्यर्थः । अयमभिसन्धिः—वाच्याङ्गभूतव्यतिरेकादिसाजात्यमात्रेणालङ्कारव्यवहारो भाक्तः, न पुनः पारमार्थिकः, तस्य व्यङ्ग्यभावेनाप्रतीतेः (२)। रसाद्यपेक्षया पुनरप्राधान्येऽपि न काचित्क्षतिरिति पूर्वमेवोक्तम् । ये तु रसाद्यपेक्षयाऽलङ्कारत्वं मन्यन्ते ते तिमिरपटलपिहितदृशो न वस्तुतत्वं प्रेक्षन्ते । वाच्यवाचकालङ्करणद्वारा हि रसोत्कर्षकमलङ्करणं रसाद्युत्कर्षणमात्रेण [यद्य- ?] लङ्कारतयाऽङ्गीक्रियते (३) वाच्यादिष्वपि तत्प्रसङ्गः कस्य गुरोराज्ञया निवार्य इत्यलं शुष्कचर्वणाभिः ।

---

(१) काश्मीरीयप्रत्यभिज्ञादर्शनविमर्शकानां श्रीमतां वसुगुप्ताचार्याणां पद्यमेतदिति सर्वदर्शनसंग्रहतोऽनुमीयते ।

(२) 'कवङ्गभावेने'त्यादर्शपुस्तकेऽस्फुटः पाठः ।

(३) एवमादर्शपुस्तके पाठः । 'यद्यलङ्कारतयाऽङ्गीक्रियते तदा वाच्यादिष्वपी'त्यादिः प्रकृते पाठः स्यात् । एतत्साकूतं कटाक्षितं ध्वनिप्रस्थानेऽश्रद्धावद्भिर्ध्वनिप्रध्वंसनव्यसननिरतैर्यत्सुबहुसम्बद्धकल्पं जल्पितं तदेवोद्दिश्य

वस्तुमात्रं यथा

पंथिअ ण एत्थ सत्थरमत्थि मणं पत्थरत्थले गामे ।
उण्णअपओहरं पेक्खिऊण जइ वससि ता वससु ॥ ५८

अत्र यद्युपभोगक्षमोऽसि तदा आस्स्वेति व्यज्यते ।

---

सत्थर स्रस्तरं शास्त्रपूर्वज्ञानोपदेशश्च (१) । मणं मनाक् (२) । पयोधराः स्तना मेघाश्च । अत्र वाच्यव्यङ्ग्ययोः सादृश्यादिविरहान्नालङ्कारध्वनिः । सादृश्यादिहीनयोरपि च स्वरूपमात्रेण ज्ञानेऽपि व्यञ्जनं नियामकमित्युक्तम् (३)। अत्र यदीति पर्यवसानकथनं (४) न तु प्रस्तुतम्।

---

टीकाकृन्द्भिरादर्शविचारभङ्गिप्रतिभामुद्भावयतां खण्डनखण्डखाद्यकृत्प्रभृतीनां सोत्प्रासावज्ञं प्रतिपक्षमतं सकौशलं दूषयतां नीतिमनुसरद्भिर्विहितमित्यापाततः प्रतिभाति । एते रसस्यात्मत्वमङ्गीकुर्वाणा अपि रसं वाच्यत्वपक्षे क्षिपन्तीत्यहो मोहपरम्परा । द्वितीयोल्लासे पञ्चमोल्लासे च विस्तरतोऽस्यापसिद्धान्तस्य निराकरणमकारि ।

(१) शास्त्रमिति पदस्यापि 'सत्थर'मिति प्राकृते विपरिणमनं सम्भवि । एतदेवाभिलक्ष्य व्यङ्ग्यपक्षे 'शास्त्रपूर्वे'त्यादि विवरणं टीकायाम् । यथा च कामशास्त्रस्यैवात्रोद्देशस्तथा 'पत्थर-पओहर-पन्थिअ'पदैर्गाथास्थैः स्फुटमेवाभास्यते ।

(२) अत्रादर्शपुस्तके 'पत्थरत्थले' इत्यस्य विवरणं प्रमादात्पतितं भवेत् । प्रस्तराः पाषाणाः प्रस्तरप्राया अविदग्धाश्चेति व्याख्या ।

(३) द्वितीयोल्लासे 'अनेकार्थस्य शब्दस्ये' त्यादिकया कारिकयाऽभिधामूलव्यञ्जननिर्देशावसरे तत्र च 'भद्रात्मन' इत्यादिलक्ष्यलक्षणप्रसङ्ग (७२-७३ पृ०) दर्शितमेतत् । तत्रोदाहरणे सादृश्यद्योतनेनोपमाध्वानद्वितीयकक्षाऽन्तर्भुक्तो ऽपरो व्यञ्जनाव्यापारः । नेदृशेषु स्थलेषु श्लेषालङ्कारस्य प्रसङ्गः ।

(४) पर्यवसिततयेत्यर्थः ।

शनिरशनिश्च तमुच्चैर्निहन्ति कुप्यसि नरेन्द्र ! यस्मै त्वम् ।
यत्र प्रसीदसि पुनः स भात्युदारोऽनुदारश्च ॥ ५६

अत्र विरुद्धावपि त्वदनुवर्तनार्थमेकं कार्यं कुरुत इति ध्वन्यते ।

---

शनिर्ग्रहः, अशनिर्वज्रः। उदारो महान्। अनुदारोऽमहान् अनुगतदारश्च। अत्र पूर्वार्धे विरोधिनोः सामानाधिकरण्यविरहान्न विरहावगतिरिति वस्तुध्वनिः। अत एव विरुद्धावपीति द्विवचनं वृत्तौ। उत्तरार्धे च सामानाधिकरण्यमिति विरोधध्वनिरेव। न च पूर्वत्रापि तच्छङ्का, एकविषयताऽभावात्। चकारबलेन वाच्य एवात्र विरोध इति चेन्न, चकारस्यात्र समुच्चयमात्रेणैव पर्यवसन्नतया तत्कृतस्फुटत्वाभावात्। 'कुपतिमपि कलत्रवल्लभ'मित्यादौ तु पृथिवीपतित्वस्य समुच्चयासङ्गत्या कुपतिपदबोध्यत्वाप्रसिद्धतया चापाततोऽर्पिना विरुद्ध एवार्थ आक्षिप्यते, पश्चात्प्रकरणाद्यालोचनया समाधिरिति (१) वाच्यालङ्कारता। अत एव पूर्वं प्राकरणिकार्थावभासः, पश्चादेव विरोधेन प्रतीतिरिति(?)(२)। एतदेवाभिसन्धायास्माभिः पूर्वं विरोधाभास इति वृत्तौ (३) विरोधस्याभासः प्रतीतिरिति व्याख्यातम्।

---

(१) समाधिराक्षिप्तस्य विरोधस्य समाधानं, न पुनः 'समाधिः सुकरं कार्यं'-मित्यादिनोद्दिष्टः पारिभाषिकोऽलङ्कारविशेषः। विरोधालङ्कारध्वनिपक्षे विरोधप्रतीतावेवार्थस्य विश्रान्तिः। अत्र तु प्रकरणाद्यालोचनया विरोधसमाधानरूपे वस्तुन्येव तात्पर्यमिति निष्कृष्टाभिप्रायः।

(२) अत्र वाक्यं साकाङ्क्षमिति पाठो न सम्यक्।

(३) 'तिग्मरुचिरप्रताप' इति 'अमितः समित' इति मूलस्थयोः पद्ययोपरि वृत्तिव्याख्यानावसरे। यत्र साहित्यचूडामणौ (२९७ पृष्ठः) 'सभर्तृ-साधारण्येने'त्यादि धर्मवाक्यस्य साहाय्यमपेक्षितं तथाप्यनुपादेयमपि वैदग्धीमात्रे पर्यवसितम्।

[ ५४ ] अर्थशक्त्युद्भवोऽप्यर्थो व्यञ्जकः संभवी स्वतः ॥
प्रौढोक्तिमात्रात्सिद्धो वा कवेस्तेनोम्भितस्य वा ।
वस्तु वाऽलङ्कृतिर्वेति षड्भेदोऽसौ व्यनक्ति यत् ॥
वस्त्वलङ्कारमथ वा तेनायं द्वादशात्मकः ।

---

स्वतः।कविवर्णनासाचिव्यं विना सम्भवी(१) तया विनाऽर्थप्रकाशकतया स्वरूपेण वा सम्भवी। प्रौढा चमत्काराधाननिर्वर्णनास्वलौकिकार्थोक्तिः प्रौढोक्तिः। तेन कविना। उम्भितस्यान्योक्तौ विनिवेश्य भावकहृदयसंवादयोग्यतया पूरितस्य। कवितुर्हि रामाद्यनुकार्यवन्न रागाद्याविष्टता। ततश्च तदुक्तोपनिबन्धेऽधिकं चमत्करणं संवित्तिसाक्षिकमिति कवि-तन्निबद्धप्रौढोक्तिभेदानादरिणः परास्तव्यामहिमखण्डनकृदादयः(२)। द्वादशात्मकः—प्रधानव्यञ्जकव्यङ्ग्ययोः स्वरूपभेदोपधानात्। अप्रधानव्यञ्ज-

---

(१) 'सम्भाव्ये'त्यादर्शपुस्तकेऽसङ्गतप्रायः पाठः। वस्तुतस्तु 'तया विने'त्याद्यंशोऽधिक एव प्रतिभाति। टीकाव्याकरणपरः कस्यचित् पुस्तकस्य टिप्पण्यंशः प्रमादतः केनापि लिपिकारेण टीकाग्रन्थ एवान्तर्भावितः स्यात्।

(२) महिमपदेन महिमाद्दतस्य व्यक्तिविवेकाख्यध्वनिध्वंसनग्रन्थकर्तुर्महिमभट्टस्य ग्रहणं खण्डनकृत्पदेन खण्डनखण्डखाद्यकर्ता कवितार्किकधुरीणः श्रीहर्ष एवोद्दिष्टः स्यात् यश्चण्डीदासेन प्राक् रसतत्त्वविवेचनावसरे (११८पृ०) प्रमाणीकृतः यश्च सरससुन्दरशरवत्तत्परगद्यसन्दर्भप्रवर्णनादश'-तया तस्य बहुमत इत्यनुमीयते। परं नायं प्रमाणोपन्यासः सुस्थित इति ध्वनिभेददर्शनऽनास्थावतां महिमभट्टानां प्रौढोक्तिपदार्थमनालोच्यतां खण्डनकृतां ग्रन्थतो वा वक्तुं शक्यते। 'यस्य हि यल्लक्षणानुगमे सत्यवान्तरविशेषसंस्पर्शः स तस्य प्रकार इत्युच्यते ..न चात्र विशेषसंस्पर्शः कश्चिदिति सन्दर्भः, प्रथमविमर्शनीयक्विचरावसरे सामान्यतो मतस्यास्य परिपोषकोऽपि नैतद्विशिष्टपदार्थविभजनपरेऽर्थे उपयुज्यते। 'परास्तव्या हेमचन्द्रप्रभृतय' इत्याकारः पाठ एव टीकाग्रन्थीय इति न दुर्विदग्धमनुमानयं यतस्तत्कृतकाव्यानुशासने (४६-४७पृ०) 'इति भेदकथनं न न्याय्यम्। किं प्रपञ्चेन' 'वृत्तौच एवंभेदपरिकल्पने शिष्यव्यामोह एव संपद्यते' इति भेदानादरः स्पष्ट एव।

स्वतःसम्भवी न केवलं भणितिमात्रनिष्पन्नो यावद्बहिरप्यौचित्येन संभाव्यमानः। कविना प्रतिभामात्रेण बहिरसन्नपि निर्मितः कवि-निबद्धेन वक्त्रेति वा द्विविधोऽपर इति त्रिविधः। वस्तु वाऽलङ्कारो वाऽसाविति षोढा व्यञ्जकः। तस्य वस्तु वाऽलङ्कारो वा व्यङ्ग्य इति द्वादशभेदोऽर्थशक्त्युद्भवो ध्वनिः।

क्रमेणोदाहरणम्—

अरसशिरोमणि धुत्ताणं अग्गिमो पुत्ति धणसमिद्धिमओ।
इअ भणिएण णअङ्गी पप्फुल्लविलोअणा जाआ ॥६०

अत्र ममैवोपभोग्य इति वस्तुना वस्तु व्यज्यते।

धन्याऽसि या कथयसि प्रियसङ्गमेऽपि
विस्रब्धचाटुकशतानि रतान्तरेषु।
नीवीं प्रति प्रणिहिते तु करे प्रियेण
सख्यः शपामि यदि किंचिदपि स्मरामि ॥६१

अत्र त्वमधन्या अहन्तु धन्येति व्यतिरेकालङ्कारः।

---

कस्य तु पदादेर्वैचित्र्याद्भेदान्तराणि वक्ष्यन्ते। न केवलमिति प्रौढोक्ति-साहचर्यप्रकटनम्। न खलु तामन्तरेण प्रकाशमानोऽप्यर्थश्चमत्करणयोग्यः, न वा तथाभूतस्य काव्याङ्गता। असन्नप्रसिद्धः। अपरः समनन्तर-मेवोक्तः। यद्यपि व्यङ्ग्यस्वरूपेऽपि सम्भवन्ति स्वतःसम्भवादिभेदाः, तथाप्यलौकिकरूपेणैव तस्य काव्योपयोग इत्यगणनम्। अरसाः(१)कौतु-कानिविष्टाः, धूर्त्ता वञ्चकाः। अत्रेति—प्रफुल्लविलोचनत्वेन ममैवोप-भोगयोग्य इति वस्तु व्यज्यत इत्यर्थः। धन्येति वैपरीत्येनाधन्यता लक्ष्यते, तदतिशयश्च व्यज्यते। न किञ्चिदपि स्मरामीत्यनेन च रागावेशा-

---

(१) रुचक-माणिक्यचन्द्र श्रीधर-श्रीविद्याचक्रवर्तिभट्टगोपाल-प्रभृतीनां प्राचीना-नामयमेव पाठः। अलसेत्यादि गोविन्द-भीमसेनादीनामर्वाचीनानां पाठः। अरसा अरोचकिन इति साधु व्याख्यातं राजानकरुचकेन।

दर्पान्धगन्धगजकुम्भकपाटकूट-
संक्रान्तिनिघ्नघनशोणितशोणशोचिः ।
वीरैर्व्यलोकि युधि कोपकषायकान्तिः
कालीकटाक्ष इव यस्य करे कृपाणः ॥६२

अत्रोपमालङ्कारेण सकलरिपुबलक्षयः क्षणात्करिष्यते इति वस्तु ।

---

वशंवदतयाऽकृत्रिमप्रेमरूप धन्यत्वं व्यज्यत इत्युभयसङ्कलनया व्यतिरेकपर्यवसानम् । धन्याऽसीत्यत्र तु वाच्यव्यतिरेको नाशङ्कनीयः, त्वं धन्या नाहमित्याद्याकारवाच्यविरहात् ।

निघ्नमत्यन्तसंश्लिष्टम् । कोपेन कषाया रक्तसितासितरूपा कान्तिर्यस्य । काली महामारी । अत्र सादृश्यमात्रप्रतीतौ नोक्तरूपव्यङ्ग्यनिष्पत्तिः । न हि तत्सदृशं वस्तु तत्कार्यं करोति; तस्मात्कालीकटाक्षतया सम्भाव्यमानः कृपाणो दृष्टः, न तत्सादृश्यमात्रविशिष्टः, प्रतीतेर्बहिरङ्गत्वाप्रसङ्गा,दित्युत्प्रेक्षैव वरं नोपमा । वृत्तौ तूपमापदप्रयोग औपम्यसम्भावनायामपि विद्यमानतया सङ्गमनीयः । यत्तु श्रीधरेण विकल्पितं, 'कस्य सम्भावना कवेर्वीराणां वा ? नाद्यः, तेन शोणत्वाख्यधर्मस्य कृपाणकटाक्षगततया विम्वप्रतिविम्वभावेन निर्देशात् । न द्वितीयः, तेषां कृपाणस्वरूपमात्रप्रतीते' रिति,(१)तद्विकल्प-

---

(१) अत्र रुचकमतमेव श्रीधरेणानूदितं शब्दतोऽर्थतश्च । उत्प्रेक्षापक्षध्वंसने रुचकस्य साटोपः प्रयासस्तस्य सम्भावनीयतां प्राचीनस्य कस्यापि तत्पक्षसमर्थनञ्च सूचयति । किमसावज्ञातनामा प्राचीनतरः काव्यप्रकाशटीकाकर्ता उत मम्मटपूर्वभावी कोऽपि निबन्धकृदिति न सुशकं कथयितुम् । चण्डीदासेन तदनुसारिणा विश्वनाथेन चोत्तरश्लोकव्याख्यानावसरे इतरत्र च वृत्तिग्रन्थदूषणप्रायं विवरणं विहितम् । रुचकोपज्ञेयं दोषदृष्टिरिति तद्ग्रन्थादेवावसीयते । श्रीविद्याचक्रवर्त्ति-भट्टगोपालप्रभृतयोऽप्येनमेव मार्गमनुसरन्ति । 'कुलपरम्परोपदेश' इति चण्डीदासस्य सोत्प्रासमवज्ञासूचनं परमतस्यासंस्थितत्वं द्योतयितुम् ।

गाढकान्तदशनक्षतव्यथासंकटादरिवधूजनस्य यः ।
ओष्ठविद्रुमदलान्यमोचयन्निर्दशन् युधि रुषा निजाधरम् ॥६३

अत्र विरोधालङ्कारेणाधरनिर्दशनसमकालमेव शत्रवो व्यापा-

---

मात्रमेव । न हि विम्बप्रतिविम्बभावः सम्भावनां प्रति वैरी [१]। दृश्यते ऽपि हि यथा मम—

कण्ठे लसत्-(कण्ठोल्लसत्-) काञ्चनयज्ञसूत्रः संवीज्यमानः सितचामरैर्यः।
श्यामो वभासे तडितोपगूढश्चद्वलाकः किमु वारिवाहः॥

अत्र हि किमुना स्फुटैव सम्भावना। वीराणाञ्च स्वरूपमात्रेणैव प्रतीतिरिति किं ते कुलपरम्परोपदेशः? तस्माद्व्यङ्ग्यप्रतीतेरन्यथाऽनुपपत्त्या वीराणां सम्भावना कवितरि भावकेषु च प्रतिफलतीत्यत्र न कार्यो दुर्ग्रहः। ईदृश्याश्च सम्भावनाया न. लोकेऽप्यसम्भव इति स्वतः-सम्भवित्वम्।

गाढेति—अत्रौष्ठविषयो निर्दशनमोचनक्रिययोर्वर्त्तमानातीता-पदेशाद्विपरीतकालयोर्विरोधः कार्यकारणव्यत्ययातिशयोक्तिरूपो वाच्यः। स च प्रसिद्ध एवेति स्वतःसम्भवी। तुल्यश्चमत्काराणां योगः करणं ययोस्तौ तुल्ययोगिनौ, तयोर्भावः समुच्चयाभिधानं, ततश्चाधरो निर्दष्टः शत्रवो व्यापादिताश्चेति समुच्चयालङ्कृतिर्व्यज्यते [२]। प्रकृत-

---

प्रदीपग्रन्थोपरि प्रभोद्द्योतकृतोर्विवरणं मूलग्रन्थोपरि सुधासागरकारादीनामर्वाचीनानां व्याख्यानञ्च तार्किकम्मन्यानामेषां वितण्डाऽऽडम्बरमेव प्रकटयतीत्यलं शुष्केक्षुचर्वणेन।

(१) एवम् 'आवर्जिता किञ्चिदिव स्तनाभ्या'मित्यादिके कुमारपद्ये बिम्ब-प्रतिबिम्ब-भावसत्वेऽप्युत्प्रेक्षोपपादकता चण्डीदासादर्वाचीनेन प्रथितनाम्नाऽप्पय्य-दीक्षितेन च रुय्यकसरणिमनुसरता चित्रमीमांसायां समदर्शि।

(२) न तुल्ययोगितेत्याकाङ्क्षापूरणं टीकाग्रन्थेऽपेक्षितं भवति, अन्यथोत्तरग्रन्थस्य निराकाङ्क्षताप्रसक्तिः। परमेवमादिसन्दर्भरचनाद्दिहैव चेतरत्रोपलभ्यते।

दिता इति तुल्ययोगिता। मम क्षत्याऽप्यन्यस्य क्षतिर्निवर्ततामिति तद्बुद्धिरुत्प्रेक्ष्यत इत्युत्प्रेक्षा च। एषूदाहरणेषु स्वतःसंभवी व्यञ्जकः।

कैलासस्य प्रथमशिखरे वेणुसंमूर्च्छनाभिः
श्रुत्वा कीर्तिं विबुधरमणीगीयमानां यदीयाम्।
स्रस्तापाङ्गाः सरसबिसिनीकाण्डसञ्जातशङ्का
दिङ्मातङ्गाः श्रवणपुलिने हस्तमावर्त्तयन्ति ॥६४

अत्र वस्तुना येषामप्यर्थाधिगमो नास्ति तेषामप्येवमादिबुद्धिजननेन चमत्कारं करोति त्वत्कीर्तिरिति वस्तु ध्वन्यते।

---

योरप्रकृतयोर्वा समानगुणक्रियासम्बन्धरूपायास्तुल्ययोगिताया गन्धोऽप्यत्र नास्ति। अत्र विरोधालङ्कृतस्यार्थस्य व्यङ्ग्यालङ्कृति-र्विरोधव्यङ्ग्याऽपि भवति। ममेति—निर्दंशरूपनिष्ठुरपिशाचाय एकं मदधरं बलिमुपकल्प्यान्येऽधरास्तद्विनिर्मुक्ताः सुखिनो निवसन्त्विति बुद्ध्येवासौ निजाधरं पुनः पुनर्दष्टवानित्युत्प्रेक्षा तु सम्भाव्यते। ततश्चानयोरेकव्यञ्जकार्थप्रवेशलक्षणः सङ्कर इत्यभिसम्पन्नः।

---

श्लोकस्यास्य वृत्तिग्रन्थोपरि विवृतिमुद्दिश्य प्रवर्तिता विप्रतिपत्तिधारा काव्यप्रकाशटीकाविमर्शकानां सुविदितैव। कार्त्स्न्येन विश्लेषणे तु सा विप्रतिपत्तिर्विरोधालङ्कारतुल्ययोगितोत्प्रेक्षापदानां वृत्तिग्रन्थस्थानां विशदीकरणप्रसङ्गाश्रयेण वरीवर्त्ति। अत्र 'य एवाधरं निर्दशति स एवोन्मोचयती'ति विरुद्धयोः क्रिययोरेककर्तृकत्वादेकविषयत्वेन विरोधालङ्कारो वाच्य इति रुचक-श्रीधरादिकृता ग्रन्थसङ्गतिः। निजाधरनिर्दंशनलक्षणायाः शत्रुवधूजनोष्ठव्यथापरिहाररूपायाश्च क्रियाया मिथो विरोध इति भट्टगोपालानुसृता पद्धतिः। माणिक्यचन्द्रस्तु 'यो हि निजमप्यधरं दशति स कथं परेषामधरान्मोचयती'ति विरोधः, परं 'विरोधद्योतकाभावादस्य वाच्यता चिन्त्ये'ति वैदग्धीभङ्ग्या संशयमुत्थापितवान्। चण्डीदासगोविन्दादीनां मते विरोधपदं न पारिभाषिकमपि तु कार्यकारण-

केसेसु वलामोडिअ तेण अ समरम्मि जअसिरी गहिआ ।
जह कन्दराहिं विहुरा तस्स दढं कंठअम्मि संठविआ ॥६५

अत्र केशग्रहणावलोकनोद्दीपितमदना इव कन्दरास्तद्विधुरान् कण्ठे गृह्णन्ति इत्युत्प्रेक्षा। एकत्र संग्रामे विजयदर्शनात्तस्यारयः पलाय्य गुहासु तिष्ठन्तीति काव्यहेतुरलङ्कारः। न पलाय्य गतास्तद्वैरिणोऽपि तु ततः पराभवं संभाव्य तान् कन्दरा न त्यजन्तीत्यपह्नुतिश्च

---

पुलिने तटे। बलामोडिअ बलात्कारेण। तस्य विधुरा इति सम्बन्धः। [दढं]कण्ठस्य सन्निवेशेन। अत्र यद्यपि समासोक्त्यलङ्कृत एवार्थो व्यञ्जकस्तथापि विशेषणतया [तस्य] प्राधान्यविरहेणागणनम्। अतएव [वृत्तिकृत] तदनपेक्षया व्यङ्ग्यं काव्यलिङ्गं सारतया मध्ये लिखितवान्। तस्य हि जयश्रीग्रहणाद्भीताः शत्रवः पलायिता इत्येव शरीरम् (वीजम्?)। दढमित्यादिभागोऽपह्नुतिदीपकः। अत्रोत्प्रेक्षाऽपह्नवसम्भेदेन सह काव्यहेतुरेकव्य-

---

क्रमव्यत्ययरूपातिशयोक्तिपरम्। वस्तुतस्तु दशमोल्लासोक्तं विरोधलक्षणं कष्टसृष्ट्याऽत्र योजनीयम्। 'तुल्ययोगिता त्वयायुक्ते'ति रुचकादीनां बहूनां मतं सुस्थितम्।'न्यूनस्यापि विशिष्टेन' इत्यादिभामहलक्षणोपयोगोऽपि चिन्त्यः। उत्प्रेक्षापदेन प्रकृतग्रन्थलक्षिताया हेतूत्प्रेक्षाया एवोद्देश इति रुचकश्रीधरावनुसृत्य चण्डीदासादयो मन्यन्ते। अन्नारोचकिनस्तु चेतनाचेतनविचारपूर्विकाया 'अन्यथैव स्थिता वृत्ति'रित्याद्याचार्यदण्डयाद्युद्भावितोत्प्रेक्षाया अयं लक्ष्यो न तु मम्मटनिर्दिष्टाया इत्युद्घोषयन्ति। 'गड्डलिकाप्रवाहपतितानां जरतां गौरवप्रबन्धनियन्त्रितोऽयं ग्रन्थकृत्' (२३ पृ:) आनन्दवर्धनादर्वाचीनस्य कस्यापि निबन्धकर्तुर्ग्रन्थमुपजीव्यैवमादिस्थलेष्वनवधानतः स्वकीयग्रन्थपौर्वापर्यविपर्ययव्यलीकोद्घाटनं टीकाकृद्भिर्बहुभिरुद्धङ्कितमवतारयतीति वितर्क्यते।

गाढालिंगणरहसुज्जुअम्मि दइए लहुं समोसरइ ।
माणंसिणीए माणो पीलणभीअ व्व हिअआहि ॥ ६६

अत्रोत्प्रेक्षया प्रत्यालिङ्गनादि तत्र विजृम्भत इति वस्तु ।

जा ठेरं व हसन्ती कइवअणंबुरुहवद्धविणिवेसा ।
दाशेइ भुअणमण्डलमण्णं चिअ जअइ सा वाणी ॥ ६७

अत्रोत्प्रेक्षया चमत्कारैककारणं नवं नवं जगदजडासनस्था निर्मिमीते इति व्यतिरेकः । एषु कविप्रौढोक्तिमात्रनिष्पन्नो व्यञ्जकः ।

जे लङ्कागिरिमेहलासु खलिआ संभोगखिण्णोरई-
फारुप्फुल्लफणावलीकवलणे पत्ता दरिद्दत्तणं ।

---

ञ्जकानुप्रविष्टः । रहसुज्जअम्मि रभसोद्यते । लहु आशु (१)। अत्र प्रत्यालिङ्गनप्रसादहसितादीनां प्रधानसन्निकर्षाधिक्यान्न वाच्याङ्गता । वाच्यसिद्ध्यङ्गत्वं विद्यत एवेति चेत्, न, आलिङ्गनोद्यममात्रेणैव वाच्यसिद्ध्यसम्भवात् । ठेरं स्थविरं प्रजापतिं दाशेइ दर्शयति चिअ (२) एव । अत्र 'हसन्ती'त्यनेन प्रजापतितो व्यतिरेको, 'जअइ' इत्यनेन च स एव (३) नवजगन्निर्मितेर्व्यङ्ग्यः । झीणा खिन्ना । खिण्णेति (४) तु व्यक्तम् । फारुप्फुल्लेति–विस्तीर्णोल्लसितेत्यर्थः । झत्ति तत्क्षणम् ।

---

(१) 'लहु समुपसप्पइ' इति रुचक-श्रीधराद्यैर्गृहीतः पाठः । स एव चण्डीदासेनाप्यनुसृत इति प्रतिभाति । अर्वाचीनटीकाकृतां केषामपि (मुद्रितेषु) अन्येषु 'लहुं समोसरइ' इति सन्दिग्धशुद्धेः पाठात्प्राचीनपरिगृहीतः पाठोऽयं साधीयान् ।

(२) अयमेव पाठः सम्प्रदायप्रकाशिन्यामुपलभ्यते । 'दावेइ...विअ' इति पाठान्तरम्

(३) 'सवनवे'त्यादर्शपुस्तके लुप्तैकमध्याक्षरः पाठः । स्रष्ट्रंशे प्रजापतितः सृष्ट्यंशे भुवनमण्डलात्तत्सृष्टाद्व्यतिरेक इति टीकाकृदाकूतम् ।

(४) 'झीणोरई'ति देशिप्राकृतमयः पाठो नेतरत्रोपलभ्यते । व्यक्तमिति सैव छाया, तथात्वे स्फुट एव चार्थ इति टीकास्थग्रघट्टकस्याशयः ।

ते एहिं मलआणिला विरहिणीणीसाससंपक्किणो '
जादा झत्ति सिसुत्तणे वि बहला तारुण्णपुण्णा विअ ॥ ६८

अत्र निःश्वासैः प्राप्तैश्वर्या वायवः किं किं न कुर्वन्तीति वस्तुना वस्तु व्यज्यते ।

सहि विरइऊण माणस्स मज्झ धीरत्तणेण आसासं ।
पिअदंसणविहलंखलखणम्मि सहसत्ति तेण ओसरिअं ॥

अत्र वस्तुनाऽकृतेऽपि प्रार्थने प्रसन्नेति विभावना, प्रियदर्शनस्य सौभाग्यबलं धैर्येण सोढुं न शक्यते इत्युत्प्रेक्षा च ।

ओल्लोल्लकरअरअणक्खएहिँ तुह लोअणेसु मह दिण्णं ।
रत्तंसुअं पसाओ कोवेण पुणो इमे ण अक्कमिआ ॥ ७०

---

अत्रेति—वस्तुना वाक्यार्थेन । इति [वस्तु] व्यज्यत इति योजना (१) । अत्र।कविनिबद्धोवक्ता कर्पूरमञ्जर्याम् ।

विहलङ्खलेति (२)—कौतुकोत्तरलेत्यर्थः । सहसत्ति सहसैव । अत्रेति—वस्तुना 'सहसत्ति'पदबोध्येन । उत्प्रेक्षेति—ओसरिअमिति व्यङ्ग्या । चेति (३) संसृष्टिसूचनं, परस्परसाचिव्यापेक्षया त्वेकव्यञ्जक-

---

(१) 'वस्तुने'ति पदं वृत्तावस्थानस्थितमिति तात्पर्यम्। अत्र "वस्तुना निःश्वासै"-रित्यादि 'कुर्वन्ती'त्यन्तं वस्तु व्यज्यत इत्येव योजनीयो वृत्तिग्रन्थः ।

(२) अत्र श्रीविद्याचक्रवर्त्तिभिः 'वीहल' खणे खणे झत्ती'ति यत्पाठान्तरमाविष्कृतं तत् 'वीहल'मिति पदस्य सन्दिग्धप्रामाण्यतया 'खणे खणे झत्ती'-त्यसङ्गत्या चामनोज्ञम् ।

(३) 'उत्प्रेक्षा वे'ति भट्टवामनाचार्यमुद्रितपुस्तके पाठः प्राचीनै रुचक-श्रीधर-चण्डीदासश्रीविद्याचक्रवर्त्तिप्रभृतिभिर्गोविन्द-भीमसेन-नागोजि-वैद्यनाथ-प्रभृतिभिरर्वाचीनैश्चागृहीतत्वादुपेक्ष्य एव ।

अत्र किमिति लोचने कुपिते वहसि इत्युत्तरालङ्कारेण न केवल-मार्द्रनखक्षतानि गोपायसि यावत्तेपामहं प्रसादपात्रं जातेति वस्तु।

महिलासहस्सभरिए तुह हिअए सुहअ सा अमाअन्ती ।
अणुदिणमणण्णकम्मा अङ्गं तणुअं वि तणुएइ ॥ ७१

अत्र हेत्वलङ्कारेण तनोस्तनूकरणेऽपि तव हृदये न वर्तते इति विशे-पोक्तिः । एषु कविनिबद्धवक्तृप्रौढोक्तिमात्रनिष्पन्नशरीरो व्यञ्जकः । एवं द्वादश भेदाः।

---

त्वमेव । आत्रदर्द्रार्द्रकरजरदनक्षतैस्तव मम लोचनयो रक्तांशुकं प्रसादो दत्तः कोपेन पुनरिमे नाक्रान्ते(१)। अत्रेति प्रश्नःनेनोन्नीयमानस्य यदुत्तरवाक्यं तस्य योऽलङ्कार उत्तराख्यस्तेनापह्नुतिसचिवेनेत्यु-पस्कारः (२)। नखेति रदनोपलक्षणम् । क्वचित्तु नखरदनेति पाठः। प्रसादपात्रमिति—तैर्मम प्रसन्नैरिव स्वात्मप्रकटनेनाविनयसूचनया वञ्चके त्वयि प्रणयो विच्छिन्नप्राय इति भावः। विशेषोक्तिरितिसम्मा-तुमिवेत्युत्प्रेक्षा चेत्यपि द्रष्टव्यम्। व्यञ्जक इति-व्यङ्ग्यार्थोपहित एव हि तथा ।ततश्च सहीत्यादौ सहसाऽपसरणादिरूपप्रधानव्यञ्जकस्व-रूपमात्रस्य स्वतःसम्भवित्वेऽपि न क्षतिः। अलसेत्यादौ तु द्वयोरपि स्वतः-सम्भविता। यत्र यत्र चोक्तरूपविपयाशङ्का तत्र तत्र व्यङ्ग्यवैविध्यं दर्शयता वृत्तिकृता सूचितं [तत्], यत्र तु व्यञ्जकस्वरूपस्य लोकोत्तरत्वं तत्र व्यङ्ग्यस्य स्वतस्त्वप्रत्याशा दुर्वला। एतदभिसन्धायैव स्वतःसम्भवित्वे-ऽपि न क्षतिः (?)। अरसेत्यादौ तु द्वयोरपि स्वतःसम्भवित्वादिव्यङ्ग्य-वैचित्र्यं पृथक् न गणितमिति सर्वं निस्तुषम्। उपसंहरति—एवमिति।

---

(१) एवमादर्शपुस्तके पाठः । लोचनयोर्मम दत्तम् ।...प्रसादः कोपेनेत्या-चिरेवच्छायाशरीरः पाठः ।

(२) 'स्युङ्कार' इत्यादर्शपुस्तकेऽनुचितः पाठः।

शब्दार्थोभयभूरेकः—

यथा—

अतन्द्रचन्द्राभरणा समुद्दीपितमन्मथा।
तारकातरला श्यामा सानन्दं न करोति कम्॥ ७२

अत्रोपमा व्यङ्ग्या।

—भेदा अष्टादशास्य तत्॥ ४१

अस्येति ध्वनेः।

ननु रसादीनां बहुभेदत्वेन कथमष्टादशेत्यत आह—

रसादीनामनन्तत्वाद्भेद एको हि गण्यते।

अनन्तत्वादिति—तथा हि नव रसाः, तत्र शृङ्गारस्य द्वौ भेदौ

---

शब्दार्थयोरुभयोर्भूरुभयं मिलिताभ्यामप्युद्भटशक्तिभ्यां प्रतीतिविषयो भवति व्यङ्ग्यः। यद्वा तद्भूस्तदाश्रय इति शब्दार्थोभयभूर्व्यङ्ग्योऽर्थः। तादात्म्यात्काव्यमपि तथा। अतन्द्रेति—चन्द्रः कर्पूरशशिनोः। समुत् सहर्षेति नायिकापक्षे भिन्नपदमित्येके (१)। तारका ऋक्षः नेत्रमध्यञ्च। श्यामा रात्रिः वाभ्रव्यादितन्त्रप्रसिद्धसितासितादिवर्णवती सकलवसनाभरणसुभगा [नायिका च]। अत्र रात्रिवर्णने प्रकृते श्यामाऽऽदिपदबलादर्थान्तरावगतिद्वारोपमानोपमेयता व्यङ्ग्या। तदपेक्षयाऽपि चायमर्थः पर्य्याप्नोत्येव प्रत्याययितुम्। तथाहि श्यामाऽऽदिपदस्थाने रजन्यादिपदनिक्षेपे कं सानन्दं न करोतीत्युक्ते कान्तासादृश्यं प्रतीयत एव, ततश्च द्वयोरपि शक्तिदार्ढ्यम्। अष्टादश उक्ता इति शेषः। उक्तेन क्रमेण (२) अर्थान्तरसंक्रमितात्यन्ततिरस्कृतवाच्यौ (१) अलक्ष्यक्रमव्यङ्ग्यः, (२)। शब्दमूले वस्त्वलङ्कृती, अर्थमूला द्वादश उभयमूलश्चेत्यष्टादश। अस्येत्यनन्तराकृष्टया सङ्गतिरित्याह—ध्वनेरिति।

---

(१) रुचकश्रीधरादयः।

(२) एक इति शेषः। एक इत्यंशष्टीकाग्रन्थस्य आदर्शे प्रमादपतितो वा स्यात्।

संभोगो विप्रलम्भश्च,संभोगस्यापि परस्परविलोकनालिङ्गनपरिचुम्ब-नादिकुसुमोच्चय-जलकेलि-सूर्यास्तमय-चन्द्रोदय-षड्तुवर्णनादयो बहवो भेदाः, विप्रलम्भस्याऽभिलापादय उक्ताः, तयोरपि विभावानुभावव्यभिचारिवैचित्र्यं, तत्रापि नायकयोरुत्तममध्यमाधमप्रकृतित्वं, तत्रापि देशकालावस्थाऽऽदिभेदाः—इत्येकस्यैव रसस्यानन्त्यं, का गणना त्वन्येषाम्। असंलक्ष्यक्रमत्वन्तु सामान्यमाश्रित्य रसादि-ध्वनिभेद एक एव गण्यते।

वाक्ये द्व्युत्थः—

---

परिचुम्बनादीत्यादिपदमन्तरङ्गरतपरिग्राहकम् (१)। बहव-इति उक्तानामितरेषाञ्च विभावानुभावसञ्चारिणां स्वरूपनिर्णयानाञ्च लोष्ट्रप्रस्तारेणानन्त्यादिति भावः। नायकयोरित्येकशेषः (२)। उत्तमेत्या-दि वृषमृगादिरूपतया स्मरतन्त्रप्रसिद्ध्या नेयम्, अन्यथाऽनुत्तमप्रकृतावा-भासतानियमेन रसभेदगणनायामप्रवेशात्। देशकालभेदौ देशादिभेदत्वा-रोपयोगिनौ वसन्तादिनदीतीरादिरूपौ वा(३) साक्षात्त्वदीपकौ, विशेषेण विप्रलम्भे अथ? (४)। अवस्था बाल्यादिकाः। एकस्यैव रसस्येति–अन्ये-षां रसानां तदाभासानाञ्च विचित्रतागणने किं पुनर्वाच्यमिति भावः। एतदेवाह—केत्यादिना। ननु यद्यानन्त्यं कथं तर्हि एकधा गणन-मित्याह—असंलक्ष्येति।

वाक्य इति—यत्रैकैकपदस्य नासाधारणी शक्तिः तत्र समग्र-

---

(१) मूले 'लिङ्गन-परिचुम्बनादि-कुसुमोच्चये'ति पाठः कार्यः, ननु परिचुम्बन-कुसुमोच्चयेति कैश्चिद्गृहीत इति टीकाकृदाशयः। आदिपदेनालिङ्गनादि-बाह्यव्यतिरिक्तस्याभ्यन्तररतस्य कामशास्त्रोद्दिष्टस्य ग्रहणम्।

(२) 'रिति समवशेष' इत्यादर्शपुस्तके पाठः।

(३) 'नदीतीरादिवसन्तादिरूपौ' इत्येव भाव्यम्।

(४) एवमादर्शपुस्तके। परमस्य पदस्योपयोगः प्रकृते चिन्त्यः।

इक्षुरथ इति शब्दार्थोभयशक्तिमूलः ।

—पदेऽप्यन्ये—

'अपि'शब्दाद्वाक्येऽपि । एकावयवस्थितेन भूषणेन कामिनीव पदद्योत्येन व्यङ्ग्येन वाक्यव्यङ्ग्याऽपि भारती भासते । तत्र पदप्रकाशत्वे क्रमेणोदाहरणानि—

---

मेव वाक्यमाश्रित्य व्यङ्ग्योऽवस्थित इत्युच्यते । इक्षुरथश्चव्यङ्ग्यस्तथा नियत एव लक्ष्ये प्रसिद्धः । तेन—

त्वदनु गतवतीश सा मदर्थे त्वमपि मया सदृशीकृतोऽसि धात्रा ।
वहति वपुरिदं गतागतैस्तेऽनवरतखेदमवाप्य यत्कृशत्वम् (१)॥

इत्यत्रानवरतेति प्रकरणाद्वाच्यपर्यवसायित्वे नवरतेति पदेन वाक्यार्थेन च व्यङ्ग्यस्य तत्कान्तसम्भोगस्योभयमूलत्वेऽपि प्रायिकत्वाभावादनादरः (२) । वस्तुतस्तु यथादर्शनं भेदगणना कार्या । पदेऽप्यन्य

---

(१) दूतीमुपभुक्तवन्तं नायकं प्रति विरहविधुराया विदग्धाया नायिकायाः सोत्प्रासखेदमुपालम्भवचनमेतत् ।

(२) लक्ष्याणां बहुत्वाद्वृत्तिकृतोदाहरणप्रदर्शनं प्रत्येकं न कृतमिति भावः ।"अत्रैकदेशस्था शब्दशक्तिरेकदेशान्तरस्था चार्थशक्तिर्व्यङ्ग्यं प्रति व्याप्रियत इति वाक्य एवोभयशक्तिमूलत्वमिति ग्रन्थकृतोऽभिप्रायः । वस्तुतस्तु शब्दशक्तिः कामं पदगताऽपि सम्भवति, अर्थशक्तिस्तु वक्त्राद्यौचित्यादेर्वाक्य एव भवतीति वाक्य एवोभयशक्तिमूलत्वमिति ध्वनिविदो मन्यन्ते" इति रुचककृतग्रन्थविवरणम् । तत्र 'शब्दशक्तिस्तावच्छब्दश्लेषवशादर्थशक्तिस्तु प्रकरणवशा'दित्युभयशक्तिमूलध्वनिप्रस्तावव्याख्यायां तस्यां लोचनकृन्मन्तव्यमेव प्रमापकम् । परिवृत्तिसहत्वासहत्वपक्षमङ्गीकुर्वाणाः काव्यप्रकाशकृतोऽत्रापि तमेव पक्षमुपजीवन्तीति वरम् । रुचककृतसंकेतोपरि चैतत्प्रसङ्गेऽस्मद्विहितविवरणं द्रष्टव्यम् ।

यस्य मित्राणि मित्राणि शत्रवः शत्रवस्तथा ।
अनुकम्प्योऽनुकम्प्यश्च स जातः स च जीवति ॥७२

अत्र द्वितीयमित्रादिशब्दा आश्वस्तत्व-नियन्त्रणीयत्व-स्नेह-पात्रत्वादिसंक्रमितवाच्याः ।

---

इति—अत्र वाक्ये पदे इति व्यङ्ग्यविपयविभागेन ध्वनिरेवार्थाद्विभक्तो बोद्धव्यः । अन्ये व्यङ्ग्यभेदा इत्यर्थः । ननु चमत्काराविष्कारक्षमः शब्दः काव्यं,चमत्कारश्च नैकपदसाध्यः । ततश्च तद्व्यङ्ग्यं क्षुद्रप्रायकमेवेति कथं तेनोपाधिना काव्यभेदनमित्याह–एकेति(१) । पदद्योत्येन व्यङ्ग्येन व्यञ्ज-नावृत्त्या पदबोध्येन वस्तुमात्रादिना । वाक्यव्यङ्ग्याऽपीति—अर्शआदि-त्वादच् । अयमर्थः—न खलु केवलस्य पदस्य तथाविधं सामर्थ्यं, किन्तु तत्पदव्यङ्ग्याश्रयपदान्तरन्तु तस्य सहकारीतिं(२)। तेन च व्यङ्ग्येन सर्वमेव स्वीयं प्रधानाप्रधानरूपं हेतुजातमुपजीव्यते । ततश्च तन्मुखेन वाक्यस्यातिशयः समीचीन इति न किञ्चिदप्यशिवम् । पदात् प्रकाशः प्रतीतिरस्येति पदप्रकाशो व्यङ्ग्यस्तस्य भावस्तत्त्वम्(३)। तत्र क्रमेणेत्यतः पूर्वं लक्षणेति शेषः(४)। उदाहरणानीति—लक्ष्यदर्शनेन लक्ष-णानि स्फुटानि भवन्तीति भावः । मित्रादिशब्दा इति—मित्रशत्र्वनु-कम्प्यजातजीवतिपदानि । स्नेहपात्रत्वादीति—सौजन्यसुश्लाघ्यजीवन-त्वपरिग्रहः । अत्र पद्येऽनेकावान्तरवाक्यवति वाक्यैकदेशिनामेव

---

(१) 'एकावयवसंस्थेने' त्यादिः ('विच्छित्तिशोभिनैकेने'त्यादिर्मुद्रितपुस्तके पाठः) ध्वन्यालोकीयः परिकरश्लोकः (२३०पृ:) गद्यान्वयमुखेनात्रानुसृतः ।

(२) 'पदेऽपी'त्याधारसप्तमीसहकारिताऽऽत्मक-निमित्तत्वाभिप्रायेणेति तात्पर्यम् ।

(३) 'पदप्रकाशत्व' इति चण्डीदासधृतः पाठः । 'पदप्रकाश्यत्व' इतीरत्र पाठः ।

(४) लक्षणाक्रमेण कारिकावृत्तिग्रन्थयोर्दर्शितार्थान्तरसंक्रमितवाच्यादिपौर्वापर्य-मनुसृत्येति यावत् ।

खलववहारा दीसन्ति दारुणा जइवि तहवि धीराणं ।
हिअअवअस्सबहुमआ ण हु ववसाआ विमुज्झन्ति ॥७४

अत्र विमुह्यन्तीति ।

लावण्यं तदसौ कान्तिस्तद्रूपं स वचःक्रमः ।
तदा सुधाऽऽस्पदमभूदधुना तु ज्वरो महान् ॥७५

अत्र तदादिपदैरनुभवैकगोचरा अर्थाः प्रकाश्यन्ते। यथा वा--

मुग्धे ! मुग्धतयैव नेतुमखिलः कालः किमारभ्यते
मानं धत्स्व धृतिं बधान ऋजुतां दूरे कुरु प्रेयसि ।
सख्यैवं प्रतिबोधिता प्रतिवचस्तामाह भीतानना
नीचैः शंस हृदि स्थितो हि ननु मे प्राणेश्वरः श्रोष्यति ॥७६

---

लाक्षणिकता, न तु पदसमभिव्याहाररूपस्य वाक्यस्य । प्रथममित्रादिपदानां हि सुहृदादिसंज्ञिबोधकानां मुख्यानुपयोगविरहेण न लाक्षणिकत्वम् ।

दारुणाः श्रेयःप्रतिबन्धकाः । हृदयमेव वयस्यः सखा, तेन बहुमता अनुमोदिताः । विमुह्यन्तीति--अत्र विमोहस्याचेतनैर्व्यवसायैरन्वयाभावेन स्थगितत्वं लक्ष्यते । विमोहश्चांशमात्रेणान्वयानुपयुक्तोऽत्यन्ततिरस्कृतः । सर्वावयवगतो विदग्धनयनोत्सवहेतुः कोऽप्यतिशयो लावण्यं, प्रत्येकमवयवानां संस्थानसौभाग्यं कान्तिः । अनुभवैकगोचरास्तत्कालचमत्कारकारिणो निर्वक्तुमशक्या अर्थाः सर्वस्वव्ययप्राणपातादिभिरपि प्रार्थनीयाः । अत्र च विभावादिसामग्रीसाध्यायामपि रसप्रतीतौ 'तदा'दिपदबोध्यतद्विशेषाणामेव प्राधान्यमनुभूयत इति पदप्राधान्यमन्वयव्यतिरेकगम्यम् । सर्वनामपदानामेवासाधारण्येन रसपोषकता नान्येषामिति भ्रमं निरस्यति--यथा वेति । धृतिर्धैर्यं, बधान गृहाण, ऋजुतां सततप्रसन्नताम् । युक्ततेति--भयस्याकृत्रिमतया मौग्ध्या-

अत्र 'भीताननेति' । एतेन हि नीचैःशंसनविधानस्य गुरुता गम्यते ।

भावादीनां पदप्रकाश्यत्वेऽधिकन्न वैचित्र्यमिति न तदुदाह्रियते ।

रुधिरविसरप्रसाधितकरवालकरालरुचिरभुजपरिघः ।
झटिति भ्रुकुटिविटङ्कितललाटपट्टो विभासि नृप ! भीम ! ॥७७

अत्र भीपर्णीयस्य भीमसेन उपमानम् ।

भुक्तिमुक्तिकृदेकान्तसमादेशनतत्परः ।
कस्य नानन्दनिस्यन्दं विदधाति सदागमः ॥७८

---

तिशयप्रकटनेन रागवत्त्वदार्ढ्य प्रत्ययाच्चमत्कारोत्कर्ष इति भावः। अधिकं न वैचित्र्यमिति—रसध्वनिस्थले तावत्प्रायशो व्यभिचारिणां पदप्रकाश्यत्वम्,एवं व्यभिचारिप्राधान्ये । दैवतादिरत्यादि -(१) रसाभासादीनाञ्च पदप्रकाश्यत्वं रससाधारणमेवेति तद्रदाहृतिसजातीयास्तदुदाहृतयोऽप्याकरसुलभा इति न पृथक् दर्शिता इत्यर्थः । विसरः प्रसारः । अत्र तु ईशार्थनियतेन भीमपदेन स्वशक्त्या वृकोदरार्थे व्यक्ते तयोः सादृश्यसम्भवादुपमा प्रतीयत इति पदशक्तिमूलोऽलङ्कृतिध्वनिः ।

भुक्तिर्विभवप्राप्तिः, सम्भोगश्च । मुक्तिः कैवल्यं, गृहभवव्यासङ्गपरित्यागसुखञ्च । एकान्तं (२) परमार्थरूपं, सङ्केतस्थानञ्च । [सदागमः] सच्छास्त्रं महाभारतादि, सतः सुन्दरस्यागमनञ्च । अत्र प्रकृतयोः

---

(१) दैवतादिरत्यादिर्भावो निरुक्तलक्षणो रसाभासश्चादी येषामिति । दैवतादिरत्यादिर्येथोक्तार्थो रसा तदाभासादयश्चेति वा विग्रहः । आदिपदेन भावाभासादीनां ग्रहणम् ।

(२) 'एकान्त' इति पुंलिङ्गप्रयोगो रुचकश्रीधरादिसम्मतः । स एवाभिधानिकानुमोदितः । माणिक्यचन्द्रेणाप्येकान्तमिति पाठो धृत इति प्रतिभाति ।

काचित्सङ्केतदायिनमेवं मुख्यया वृत्त्या शंसति ।
सायं स्नानमुपासितं मलयजेनाङ्गं समालेपितं
यातोऽस्ताचलमौलिमम्बरमणिर्विस्रब्धमत्रागतिः ।
आश्चर्यन्तव सौकुमार्यमभितः क्लान्ताऽसि येनाधुना
नेत्रद्वन्द्वममीलनव्यतिकरं शक्नोति ते नासितुम् ॥७६

---

सादृश्यादिविवक्षाविरहान्नालङ्कारध्वनिः । सादृश्यसम्भवे तु तद्विवक्षायामुपमाध्वनिरेव । मुख्यया वृत्त्या मुख्यप्रकारेण अभिधावृत्तिवोध्यप्राकरणिकार्थेन रहस्यसङ्गोपनार्थम्, एवं विदग्धोक्त्या (१)। अत्र च कस्येत्यादिप्रधानभागस्य शब्दान्वयव्यतिरेकानुविधानविरहान्न वाक्यप्रकाश्यत्वम्(२)। 'पन्थिअ' इत्यादौ (३) तु प्रेक्षणं दर्शनमभिसन्धानञ्च, वसनं विश्रामो नायिकाऽऽगमनप्रतीक्षणञ्चेत्येकैकक्रियाकारकपदव्यङ्ग्यतेत्यभिसन्धाय वाक्यप्रकाश्यतोक्ता । सम्प्रति द्वादशविधार्थशक्तिमूलस्य पदप्रकाश्यतोदाहृतयः (४)। अभितो वहिरन्तश्च। अधुना

---

(१) न त्वभिधाऽऽख्यया मुख्यतया साधारणत्वेन गृहीतया साक्षादिति व्याख्यावैदग्धीशैली श्रीधरानुसृताऽत्र प्रकटिता । यत्तु भट्टगोपालेनाभिधावृत्तिकल्पमुपजीव्य "व्यञ्जने तु भुक्तिमुक्तौ प्रवृत्तिनिवृत्ती" इत्यादि व्याख्यानं तदविचारविजृम्भितमरसिकजनोक्तप्रायमित्यनादेयम् ।

(२) परिवृत्तिसहत्वासहत्वनिमित्तोऽन्वयव्यतिरेकानुविधानमूलो न्यायो ध्वनिभेदविवेचन इतरत्रेवात्राप्यनुसृत इति टीकाकृन्मन्तव्यनिष्कर्षः ।

(३) शब्दशक्तिमूलध्वनिनिर्देशप्रसङ्ग उदाहृतं तत्पद्यम् (१२८ पृष्ठायाम्) । 'एवं च 'पन्थिअ'इत्याद्युभयशक्तिमूलस्यैवेदोहरणं वाच्यम्, अर्थशक्तेरपिव्यापारात् । अन्यथा केवलशब्दशक्तेर्वस्तुमात्रं ध्वन्यं न स्या' दित्यानन्दवर्धनमतानुयायिना रुचकेन यदुक्तं तत्प्रत्युक्तप्रायम् ।

(४) 'उद्दिश्यन्त' इत्याकाराध्याहृतक्रियायाऽन्वयः ।

अत्र वस्तुना कृतपरपुरुषपरिचया क्लान्ताऽसीति वस्तु 'अधुना'-पदद्योत्यं व्यज्यते ।

तदप्राप्तिमहादुःखविलीनाशेषपातका ।
तच्चिन्ताविपुलाह्लादक्षीणपुण्यचया तथा ॥८०
चिन्तयन्ती जगत्सूतिं परब्रह्मस्वरूपिणम् ।
निरुच्छ्वासतया मुक्तिं गताऽन्या गोपकन्यका ॥८१

अत्र जन्मसहस्रैरुपभोक्तव्यानि दुष्कृतसुकृतफलानि वियोगदुःख-चिन्ताऽऽह्लादाभ्यामनुभूतानीत्युक्तम् । एवं च 'अशेष'-'चय'पदद्योत्ये अतिशयोक्ती ।

---

क्लान्ताऽसि न तु पूर्वं, कदाचिदपि तवैवंविध क्लमो न दृष्ट इति भावः । व्यतिकरः पौनःपुन्यं सम्भेद इत्येकः । वस्तुनाऽधुनापदार्थप्रधानेन वाक्यार्थेन । 'अधुना'पदद्योत्यमिति—तदर्थस्येतरपदार्थोत्कर्षत्वस्यापि पदान्तरापेक्षया वैशिष्ट्यमित्यर्थः । एवमुत्तरत्रापि योज्यम् ।

निरुच्छ्वासतया मुक्तिं गुरुजननियन्त्रणादुःखपरित्यागं, मोक्षदशायामपि निरुच्छ्वासता "नास्य प्राणा उत्क्रामन्ति" "तत्रैव समवलीयत" इति श्रुतितः प्रसिद्धा । अनया च वाच्यातिशयोक्त्या सहितेन वाक्यार्थेन 'शेष'–'चय'–पदार्थप्रधानसचिवेन जन्मसहस्रभोग्यदुष्कृतसुकृतफलराशितादात्म्याध्यवसितभगवद्विरह-(१) दुःखचिन्ताऽऽह्लादप्रत्यायनमित्यतिशयोक्तिद्वयध्वनिः (२) । मुक्तिपदातिशयोक्तिस्तु स्पष्टतया ध्वन्यात्मनि [न] निवेशयितव्या । अत्र च व्यञ्जकस्य प्रौढोक्तिमन्तरेणापि सम्भवात् स्वतःसम्भविता ।

---

(१) 'तावद्विरहे' त्यादर्शपुस्तकेऽसङ्गतः पाठः ।

(२) नचात्र वाच्यसिद्ध्यङ्गाख्यगुणीभूतव्यङ्ग्यभेदशङ्का कार्या, वाच्यादनतिशयित्वे हि तस्य प्रसङ्गात् । अतो ध्वन्यात्मकमेतत्काव्यमिति सुस्थितम् ।

क्षणदाऽसावक्षणदा वनमवनं व्यसनमव्यसनम् ।
बत वीर ! तव द्विपतां पराङ्मुखे त्वयि पराङ्मुखं सर्वम्॥८२

अत्र शब्दशक्तिमूलविरोधाङ्गेनार्थान्तरन्यासेन विधिरपि त्वामनुवर्त्तत इति 'सर्व'पदद्योत्यं वस्तु ।

तुह वल्लहस्स गोसम्मि आसि अहरो मिलाणकमलदलो ।
इअ णववहुआ सोऊण कुणइ वअणं महिसंमुहं ॥८३

अत्र रूपकेण त्वयाऽस्य मुहुर्मुहुः परिचुम्बनं तथा कृतं येन म्लानत्वमिति 'मिलाण'दिपदद्योत्यं काव्यलिङ्गम् । एषु स्वतःसम्भवी व्यञ्जकः ।

राईसु चंदधवलासु ललिअमप्फालिऊण जो चावं ।
एकच्छत्तं विअ कुणइ भुअणरज्जं विजंभंतो ॥८४

अत्र वस्तुना येषां कामिनामसौ राजा स्मरस्तेभ्यो न कश्चि-

---

अक्षणदा अनुत्सवदा अरात्रिश्च । अवनं रक्षणं, न वनञ्च । अव्यसनमवीनां मेषाणामसनम् इतस्ततो भ्रमणं, व्यसनं कौतुकं दुःखं (१) [अव्यसनं] न व्यसनम् । पराङ्मुखं विपरीतम् । विरोधोऽङ्गमुत्थानहेतुर्यस्येति विग्रहः । गोसम्मि प्रातः । आसि आसीत् । दलो इति पुंसि,प्राकृते तादृग्लिङ्गनियमविरहात् । महीसम्मुखमवनतम् । मिलाणादिपदं मिलाणकमलदलो इति समस्तपदम् । योऽसौ (२) तस्य स्मरस्यादेशः,तत्पराङ्मुखो न कश्चिदिति योजना। तेभ्यः

---

(१) 'व्यसनं त्वशुभं दुःख'मिति यावदि'ति पाठो 'व्यसनं त्वशुभे सक्ता' वित्यादि मेदिनीकोषानुगः स्यात् । आदर्शपुस्तकस्थः पाठः 'कौतुकदुःखे'त्यादिस्तु टितइवानुमीयते । माणिक्यचन्द्रेणापि शत्रुकृतोपजापपरत्वेन 'व्यसन'-पदं विवृतम्

(२) येषां कामिनामसाविति वृत्तिग्रन्थलभ्यो योऽसाविति निर्देशः ।

दपि तदादेशपराङ्मुख इति जाग्रद्भिरुपभोगपरैरेव तैर्निशाऽतिवाह्यत इति 'भुअणरज्ज'पदद्योत्यं वस्तु प्रकाश्यते ।

निशितशरधियाऽर्पयत्यनङ्गो
दृशि सुदृशः स्वबलं वयस्यराले ।
दिशि निपतति यत्र सा च तत्र
व्यतिकरमेत्य समुन्मिषन्त्यवस्थाः ॥८५

अत्र वस्तुना युगपदवस्थाः परस्परविरुद्धा अपि प्रभवन्तीति 'व्यतिकर'पदद्योत्यो विरोधः ।

वारिज्जन्तो वि पुणो सन्दावकदत्थिएण हिअएण ।
थणहरवअस्सतए विसुद्धजाई ण चलइ से हारो ॥८६

अत्र विशुद्धजातित्वलक्षणहेत्वलङ्कारेण हारोऽनवरतं कम्पमान एवास्ते इति 'ण चलइ'पदद्योत्यं वस्तु ।

सो मुद्धसामलङ्गो धम्मिल्लो कलिअललिअणिअदेहो ।
तीए खंधाहि बलं गहिअ सरो सुरअसङ्गरे जअइ ॥८७

---

कामिभ्यः (१), निर्धारणे पञ्चमीपक्षस्तु नानुशासनिकः । उपभोगपरैर्जाग्रद्भिः सद्भिरिति योजना । आज्ञाप्रधानं राज्ञां कर्म राज्यं, भुवनराज्यपदस्येदृगर्थव्यञ्जकता (२) । अराले विविधवैदग्धीगहने वयसि यौवने । व्यतिकरं मिश्रीभावम् । अवस्थाः क्षणनिर्वेदोन्मादचाटुकाकवहित्थाद्याः । सन्दावो सन्तापः, वअस्सतए (३) वयस्यतया । से तस्याः । अत्रेति—विशुद्धजातयो हि न स्वसन्निवेशाच्चलन्ति (४) । सरो स्मर

(१) एतद्वाक्यद्वयमादर्शपुस्तके व्यत्यस्तं दृश्यते । तेभ्यइत्यस्य'पराङ्मुख' पदेन परामर्शः ।

(२) श्रीधरविवरणस्यायमनुवादः । 'आज्ञाप्रधान'मिति कर्मे'त्यस्य विशेषणम् । राज्ञां कर्मेति वैयाकरणसम्मता राज्यपदस्य निरुक्तिः ।

(३) 'वअस्यतए' इति चण्डीदासगोविन्दादिभिः पठितं,'वअस्सएणो' ति स्वार्थे 'क'युक्तमितरैः ।

(४) "विशुद्धाभिजना हि परार्थे जीवितमपि त्यजन्ति न पुनः स्वधर्माच्चलन्ती"ति विवेकमन्तव्यं भङ्ग्यन्तरेणैतदेव सूचयति ।

अत्र रूपकेण मुहुर्मुहुराकर्षणेन तथा केशपाशः स्कन्धयोः प्राप्तो यथा रतिविरतावप्यनिवृत्ताभिलाषः कामुकोऽभूदिति 'खंध'पदद्योत्या विभावना । एषु कविप्रौढोक्तिमात्रनिष्पन्नशरीरः ।

णवपुण्णिमामिअङ्कस्स सुहअ को तं सि भणसु मह सच्चं ।
का सोहग्गसमग्गा पओसरअणिव्व तुह अज्ज ॥८८

अत्र वस्तुना मयीवान्यस्यामपि प्रथममनुरक्तस्त्वं, न तत इति 'णवे'त्यादि-'पओसे' त्यादिपदद्योत्यं वस्तु व्यज्यते ।

सहि णवणिहुवणसमरम्मि अङ्कवालीसहीए णिविडाए ।
हारो णिवारिओ विअ उच्छेरन्तो तदो कहं रमिअं ॥

अत्र वस्तुना हारच्छेदानन्तरमन्यदेव रतमवश्यमभूत्, तत्कथय कीदृगिति व्यतिरेकः 'कहं'पदगम्यः ।

(२) यथा वा—

विहलंखलं तुमं सहि दट्ठूण कुडेण तरलतरदिट्ठिं ।
वारप्फंसमिसेण अ अप्पा गुरुओत्ति पाडिअ विहिण्णो ॥९१

एवेति रूपकम् । मात्रेति–बहिःसम्भवाभावात्। तं सि त्वमसि । अङ्कपालिः आलिङ्गनं सैव सखी । निविडा दृढा विश्वस्ता च । उच्छेरन्तो उच्छ्रियमाणः । कथमिति प्रश्नेन वैलक्षण्यसूचनाद्व्यतिरेकः । घटो(१)

(१) एवमादर्शपुस्तके । परं 'कुटो जलभाण्डभेद' इत्येव स्यात्, घटपदस्यातिस्पष्टस्य विवरणेऽनवसरात् ।

(२) एवं टीकाग्रन्थस्य पाठश्चेत्तदा चण्डीदासेन रुचकश्रीधरावनुसृत्य 'पविसन्ती घरे'त्यादिर्गाथा वृत्तिग्रन्थबहिर्भूतेति मन्यते स्म । माणिक्यचन्द्रेण 'पविसन्ती'ति 'विहलंखल'मिति चोभे एव गाथे गृहीते । भट्टगोपालेन पुनः 'यथावे'ति निर्दिष्टोत्तरगाथा नाङ्गीकृता । एवमिहापि यथा तृतीयोल्लासे (६१ पृ०) वृत्तिग्रन्थस्यान्यैर्न्यासः साधित इति नासह्यमनुमानम् ।

अत्र नदीकूले लतागहने कृतसङ्केतमप्राप्तं गृहप्रवेशावसरे पश्चादागतं दृष्ट्वा पुनर्नदीगमनाय द्वारोपघातव्याजेन बुद्धिपूर्वं व्याकुलया त्वया घटः स्फोटित इति मया चिन्तितम्, तत्किमिति नाश्वसिषि, तत्समीहितसिद्धये व्रज, अहं ते श्वश्रूनिकटे सर्वं समर्थयिष्य इति द्वारस्पर्शनव्याजेनेत्यपह्नुत्या वस्तु।

जोह्लाइ महुरसेण अ विइण्णतारुण्णउस्सुअमणा सा।
वुड्ढा वि णवोढ व्विअ परवहुआ अहह हरइ तुह हिअअं ॥९२

अत्र काव्यलिङ्गेन वृद्धां परवधूं त्वमस्मानुज्झित्वाऽभिलषसीति त्वदीयमाचरितं वक्तुं न शक्यमित्याक्षेप 'परवहू'पदप्रकाशः।

एषु कविनिबद्धवक्तृप्रौढोक्तिमात्रनिष्पन्नशरीरः। वाक्यप्रकाशे तु पूर्वमुदाहृतम्। शब्दार्थोभयशक्त्युद्भवस्तु पदप्रकाशो न भवतीति पञ्चत्रिंशद्भेदाः।

(६०) प्रबन्धेऽप्यर्थशक्तिभूः ॥ ४२

यथा गृध्रगोमयुसंवादादौ—

अलं स्थित्वा श्मशानेऽस्मिन्गृध्रगोमायुसङ्कुले।
कङ्कालबहुले घोरे सर्वप्राणिभयङ्करे ॥ ९३
न चेह जीवितः कश्चित्कालधर्ममुपागतः।
प्रियो वा यदि वा द्वेष्यः प्राणिनां गतिरीदृशी ॥ ९४

इति दिवा प्रभवतो गृध्रस्य पुरुषविसर्जनपरमिदं वचनम्।

---

जलभाण्डभेदः। हृदयहरणहेतोः 'जोह्लाइ' इत्यादिना निर्देशात् काव्यलिङ्गता। वाक्याद्व्यङ्ग्यप्रतीतिर्वाक्यप्रकाशः। अत्र पूर्वमर्थान्तरसंक्रमितवाच्यादिसामान्यलक्षणतस्तावदुदाहृतम्। पञ्चत्रिंशदिति–वाक्यप्रकाशेऽष्टादश, पदप्रकाशे तु सप्तदश।

प्रबन्धो महावाक्यम्। अर्थशक्तिभूः संलक्ष्यक्रमव्यङ्ग्यो वस्तुमात्रालङ्कृतिरूपो द्वादशविधः। कालधर्मो मरणम्। दिवा प्रभवतो निशाऽऽगमनशङ्किनः। पुरुषविसर्जनं पुरुषाणां शवपरित्यागः। एतच्च

आदित्योऽयं स्थितो मूढाः स्नेहं कुरुत सांप्रतम् ।
बहुविघ्नो मुहूर्तोऽयं जीवेदपि कदाचन ॥ ६५

अमुं कनकवर्णाभं बालमप्राप्तयौवनम् ।
गृध्रवाक्यात्कथं मूढास्त्यजध्वमविशङ्किताः ॥ ६६

इति निशि विजृम्भमाणस्य गोमायोर्जनव्यावर्त्तननिष्ठं च वचनमिति प्रबन्ध एव प्रथते । अन्ये त्वेकादश भेदा ग्रन्थविस्तरभयान्नोदाहृताः स्वयन्तु लक्ष्यतोऽनुसर्त्तव्याः ।

'अपि'शब्दात्पदवाक्ययोः ।

(६१) पदैकदेशरचनावर्णेष्वपि रसादयः ।

---

पदान्तरसाचिव्येनैव महावाक्यं भवतीति तान्यनुसर्त्तव्यानि । सम्प्रति स्पष्टार्थं महावाक्यान्तरं लिखति आदित्य इति ।—स्नेहं जीवनोपायानुष्ठानरूपम् । अयं मुहूर्त्तः सन्ध्यासमासन्नकालो वन्यदारुणतया बहुविघ्नः सम्भावितभूताद्यावेशः । ततस्तदपगमात्कालान्तरे जीवितसम्भावनाऽप्यस्ति । जनव्यावर्त्तनं गृध्रभक्षणविघ्नविधायि । प्रबन्ध एव—नतु पदस्य वाक्यस्य वा शक्त्यतिरेक इत्यर्थः । अत्र वस्तुना वस्तुमात्रं व्यज्यते । व्यञ्जकश्च स्वतःसम्भवी । लक्ष्यतो (१)लक्ष्येषु ।

पदैकदेशो द्विधा, प्रकृतिः प्रत्ययश्च । प्रकृतिर्धातुप्रातिपदिकरूपा, प्रत्ययस्तु सुप्तिङाद्यनेकविधः । तत्र क्रमादुदाहरणानि—अत्र चावापोद्वापदृष्ट्या तस्य तस्यांशस्य वाचकस्यापि वाचकसमुदायप्रविष्टस्य माहात्म्येनानुशासन-(२)प्रसिद्ध-स्व-स्व-प्रतिपाद्य-प्रतिपादन-द्वारा रसादिकेषु कोऽप्यतिशय आधीयत इति तद्विद

---

(१) लक्षणत इति पाठादयं साधीयान् ।

(२) अत्रानुशासनपदेन व्याकरणकोषयोः संग्रहः ।

तत्र प्रकृत्या यथा—

रइकेलिहिअणिअसणकरकिसलअरुद्धणअणजुअलस्स ।
रुद्दस्स तइअणअणं पव्वईपरिचुंबिअं जअइ ॥ ९७

अत्र जयतीति न तु शोभते इत्यादि-समानेऽपि हि स्थगनव्यापारे लोकोत्तरेणैव व्यापारेणास्य पिधानमिति तदेवोत्कृष्टम् । यथा वा—

प्रेयान्सोऽयमपाकृतः सशपथं पादानतः कान्तया
द्वित्राण्येव पदानि वासभवनाद्यावन्न यात्युन्मनाः ।
तावत्प्रत्युत पाणिसंपुटगलन्नीवीनिबन्धं धृतो
धावित्वैव कृतप्रणामकमहो प्रेम्णो विचित्रा गतिः ॥ ९८

अत्र पदानीति, न तु द्वाराणि ।

तिङ्सुपोर्यथा—

पथि पथि शुकचञ्चूचारुराभाऽङ्कुराणां
दिशि दिशि पवमानो वीरुधां लासकश्च ।

---

एवात्र प्रमाणम् । रतिकेलिहृतनिवसनायाः करकिसलयाभ्यां रुद्धं नयनयुगलं यस्येति समासः । समानेऽपि स्थगनव्यापारे हस्तादिकृते । तदेव चुम्बनपिधानमेवोत्कृष्टं चमत्कृतिविशेषानुगुणं, तस्य च तदानुगुण्यं नयनविषयेण 'जयति'पदेन ध्वन्यते । तद्विषयत्वादेव हि तत्र 'शोभते' 'भाती'त्यनादृत्य (१) 'जयती'ति प्रयोगः । सशपथमिति मध्यगतं पदं पूर्वापरपदसम्बद्धं बोद्धव्यम् । पाणिसम्पुटेन गलन्त्यां स्खलन्त्यां नीव्यां निबन्धः प्रियस्य संश्लेषो यथा स्यात् [तथा ।] । न तु द्वाराणीति—तावत्कालमप्यनुरागोद्रेकात् मानावष्टम्भः स्थातुं शक्त इति किमपि चमत्कारबीजसूत्रणम् । प्रेयानिति—ईषन्मात्रप्रियत्वेऽपि(२)

---

(१) एवमादर्शपुस्तके । भातीत्याद्यनादृत्येति स्यात् ।

(२) एवमादर्शपुस्तके पाठः । 'ईयसुनाऽत्र प्रियत्वप्रकर्षं' इति स्यात् । 'प्रेयानितीयसुना प्रियत्वमात्रनिरासपरेण काऽपि प्रेमपात्रता द्योत्यते' इति श्रीधरमन्तव्यस्यायमनुवादः ।

नरि नरि किरति द्राक् सायकान् पुष्पधन्वा
पुरि पुरि च निवृत्ता मानिनीमानचर्चा ॥ ९९

अत्र किरतीति किरणस्य साध्यमानत्वं निवृत्तेति निवर्त्तनस्य सिद्धत्वं, तिङा सुपा च, तत्रापि 'क्त'प्रत्ययेनातीतत्वं द्योत्यते।
यथा वा—

लिखन्नास्ते भूमिं बहिरवनतः प्राणदयितो
निराहाराः सख्यः सततरुदितोच्छूननयनाः।
परित्यक्तं सर्वं हसितपठितं पञ्जरशुकै-
स्तवावस्था चेयं विसृज कठिने मानमधुना ॥ १००

---

प्रकर्षः ?। पवमानः पवनः। लासको नर्तकः। अत्र किरतीति वर्त्तमानविहितेन तिङा चेकिर्यमाणत्वं द्योत्यते। निवृत्तेति (१) प्रातिपदिकार्थमात्रेण (२) सुपा साध्यताविरहेण सिद्धत्वं, निष्ठया च तत्क्रियागतमतीतत्वं द्योतयन्त्या कार्यस्य पूर्वकालत्वलक्षणाऽतिशयोक्तिः—एतेषाञ्च व्यङ्ग्यानामास्वादानुगुणत्वं तद्विदामपरोक्षमेव। नन्वेवं वस्त्वलङ्कारव्यञ्जनाऽपि पदैकदेशस्यास्तीति रसादिमात्रव्यञ्जकतैव कुतो गण्यते (३) ? सत्यं, प्रकृतिप्रत्यययोः स्वीयस्वीयानुवाचकत्वमिलितयोस्तु मिलितार्थवाचकत्वमिति व्याकरणशास्त्रव्यवहारविलोपो मा भूदिति परिगणनम्। वस्तुतस्तु प्रकृतिप्रत्ययमेलकस्य कर्मत्वादिविशिष्टार्थवाचकत्वं वर्त्तमानत्वादिव्यङ्ग्यमेवेत्युदाहरणादौ

---

(१) "पुरि पुरि च निवृत्ता" नपुनः "पुरि पुरि विनिवृत्ते" ति वृत्तौ पाठः।

(२) सुपा प्रथमाविभक्त्युक्त्या प्रातिपादिकार्थमात्रस्य बोधः 'प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमे" त्यनुशासनबलात्।

(३) 'रसादय' इत्यत्रादिपदेन वस्त्वलङ्कृतिध्वन्योर्ग्रहणं येषां मतं तेषान्तु निर्बाधैव सङ्गतिः।

अत्र लिखन्निति न तु लिखतीति, तथा आस्ते इति न त्वासित इति, अपि तु प्रसादपर्यन्तमास्ते इति, भूमिमिति न तु भूमाविति, न हि बुद्धिपूर्वककमपरं किञ्चिल्लिखतीति तिङ्सुब्विभक्तीनां व्यङ्ग्यम्। सम्बन्धस्य यथा—

गामारुहम्मि गामे वसामि णअरट्ठिइं ण जाणामि।
णाअरिआणं पइणो हरेमि जा होमि सा होमि ॥ १०१

अत्र नागरिकाणामिति षष्ठ्याः।

"रमणीयः क्षत्रियकुमार आसी"दिति कालस्य। एषा हि भग्न-महेश्वरकार्मुकं दाशरथिं प्रति कुपितस्य भार्गवस्योक्तिः।

वचनस्य यथा—

ताणं गुणग्गहणाणं ताणमुक्कंठाणं तस्य पेम्मस्स।
ताणं भणिआणं सुन्दर! एरिसिअं जाअमवसाणं॥ १०२

अत्र गुणग्रहणादीनां बहुत्वं प्रेम्णश्चैकत्वं द्योत्यते।

---

वस्त्वलङ्कृत्योरप्येकदेशव्यङ्ग्यत्वमस्तीति परितुष्यतु भवान्। एतच्चा-तीतत्वं द्योत्यत इति वदता वृत्तिकृता स्फोरितमेव। द्योतनं व्यञ्जनमिति ध्वनिभाषा। आस्त इति—लिखनस्यानन्योपायता शतृ-वाच्या।

ग्रामरुहा ग्रामजाता। षष्ठ्या अनादरव्यञ्जकतेति शेषः। आसीदिति—सम्प्रति अस्मदमर्षकवलितः क्षणं न भविष्यतीति भावः। एरिसअं ईदृशम्। 'इरिसिअ'मिति (१) पाठे ईर्षितम्। [एरित्तणमिति] पाठे नानाविधानसन्निकृतम्। एकत्वं सततमविच्छेदेन प्रकर्षनिकर्ष-

(१) "इरिसिअ" मिति पाठान्तरमर्वाचीनैर्वैद्यनाथादिभिरपि धृतम्। 'एरित्त-ण'मिति न केनापि धृतो नापि तथा मनोज्ञः व्यङ्ग्यस्य वाच्यत्वपत्तनि-क्षेपात् सर्वथा 'एरिसअमि'ति रुचक-श्रीधरादिसम्मतः पाठ एव वरम्। छन्दोऽनुशासनसम्मतगणविभागानुसारेण चतुर्थचरणे चाष्टादशगणस्थिते-रुपरिदर्शित एव पाठः स्यात्।

पुरुषव्यत्ययस्य यथा—

रे रे चञ्चललोचनाञ्चितरुचे ! चेतः ! प्रमुच्य स्थिर-
प्रेमाणं महिमानमेणनयनामालोक्य किं नृत्यसि ।
किं मन्ये विहरिष्यसे बत हतां मुञ्चान्तराशामिमा-
मेषा कण्ठतटे कृता खलु शिला संसारवारान्निधौ ॥१०३

अत्र प्रहासः ।

पूर्वनिपातस्य यथा—

येषां दोर्बलमेव दुर्बलतया ते सम्मतास्तैरपि
प्रायः केवलनीतिरीतिशरणैः कार्यं किमुर्वीश्वरैः ।
ये क्ष्माशक्र ! पुनः पराक्रमनयस्वीकारकान्तक्रमा-
स्ते स्युर्नैव भवादृशास्त्रिजगति द्वित्राः पवित्राः परम् ॥१०४

अत्र पराक्रमस्य प्राधान्यमवगम्यते ।

विभक्तिविशेषस्य यथा—

प्रधनाध्वनि धीरधनुर्ध्वनिभृति विधुरैरयोधि तव दिवसम् ।
दिवसेन तु नरप ! भवानयुद्ध विधिसिद्धसाधुवादपदम् ॥१०५

---

राहित्यं निर्विकारात्यन्तप्रकर्षलक्षणम् । अतएवात्र वचःप्रक्रमभङ्गस्यादूषकता । चञ्चलाभ्यां लोचनाभ्यामञ्चिता प्रादुष्कृता रुचिरभिलापो यस्य । किं मन्ये विहरिष्यसे किं मन्यसे विहरिष्यामीत्यर्थः । तथा चानुशासनं 'प्रहासे च मन्योपपदे मन्यतेरुत्तम' (१) इति । प्रहासः सोपहासोत्प्रासः । नीतिराङ्गिरसादिशास्त्रं, प्रसिद्धवृत्तिप्रकारो रीतिः । अत्रेति—नयस्याल्पस्वरतया पूर्वनिपाते प्राप्ते यत्पराक्रमस्य पूर्वनिपातनं तदर्चितत्वं बोधयतीति ।

---

(1) '... एकवच्चे'ति पाणिनीयमनुशासनम् (१।४।१०६) ।

अत्र दिवसेनेत्यपवर्गतृतीया फलप्राप्तिं द्योतयति ।

भूयो भूयः सविधनगरीरथ्यया पर्यटन्तं
दृष्ट्वा दृष्ट्वा भवनवलभीतुङ्गवातायनस्था ।
साक्षात्कामं नवमिव रतिर्मालती माधवं यत्
गाढोत्कण्ठालुलितललितैरङ्गकैस्ताम्यतीति ॥१०६

अत्रानुकम्पावृत्तेः 'क'रूप-तद्धितस्य ।

परिच्छेदातीतः सकलवचनानामविषयः
पुनर्जन्मन्यस्मिन्ननुभवपथं यो न गतवान् ।
विवेकप्रध्वंसादुपचितमहामोहगहनो
विकारः कोऽप्यन्तर्जडयति च तापं च कुरुते ॥१०७

---

प्रधनाध्वनि संग्राममार्गे तव (१) विधुरैरयोधीति सम्बन्धः । नरप ! नृपते । विधिसिद्धस्य न्याय्यस्य साधुवादस्य पदं यथा तथेति (२) क्रियाविशेषणम् । अपवर्ग इति क्रियासमाप्तौ । सविधया-ऽर्थात् (३)... लुलितैर्ग्लानप्रायैः सद्भिर्ललितैर्मनोहरैः (४) । इति—कथितं लवङ्गिकयेति प्रकरणसङ्गतिः । अत्र 'क'प्रत्ययेनानुकम्पां द्योतयता किमप्यङ्गानां तानवं सूच्यते । परीति—'पुनः' शब्दोऽत्र कालान्तरमात्रे न तु पश्चात्काले । गहनो दुर्निरूपः । जडयति स्तम्भयति । 'प्र'शब्दस्य

---

(१) "नव निधुयैव विधुरै"रित्यादर्शपुस्तकेऽशोध्यः पाठः । "धनुर्ध्वनी"-त्यादंशोपरि विवरणं गलितं स्यात् ।

(२) 'यत्कर्मे'त्यादर्शपुस्तके दुष्टः पाठः ।

(३) सर्वविधयाऽर्थादितिप्रायो निस्त्रुटिचिह्न आदर्शपुस्तके पाठः । 'सविधया-ऽर्थात् समीपस्थया नगरीरथ्ययाऽथवा सविधनगरीरथ्या भूरिवसुमन्दिरा-सन्नमार्गं' इति श्रीधरटीकास्थः पाठो वाऽत्र स्यात् ।

(४) 'लुलितलुलितै' रिति पाठान्तरम् ।

अत्र 'प्र'शब्दस्योपसर्गस्य ।

कृतं च गर्वाभिमुखं मनस्त्वया किमन्यदेवं निहतश्च नो द्विपः ।
तमांसि तिष्ठन्ति हि तावदंशुमान्न यावदायात्युदयाद्रिमौलिताम् ॥१०८

अत्र तुल्ययोगिताद्योतकस्य 'च' इति निपातस्य ।

---

ध्वंसप्रकर्ष समूलोन्मूलनलक्षणं द्योतयतो महामोहप्रकर्षसूचनद्वारा राग-दार्ढ्य व्यञ्जकत्वम् । उपसर्गनिपातादीनाञ्च प्राक् (?) स्वातन्त्र्य(स्वतन्त्र-) प्रयोगलिङ्गसंख्याविभक्तिकृतविशेषविरहेण (१) वाचकवैपरीत्याद्द्योतक-त्वमेव यद्यपि महाभाष्यकारादिसम्मतं (२) तथापि रसादिव्यञ्जक-त्वमपूर्वमित्यादरणम् । आधुनिकाः पुनरमीषां वाचकत्व-

---

(१) तथाच "यत्तु वाक्यपदीये 'परतन्त्रास्तु चादयः' प्रत्ययवदेषां परत्वं न स्मर्यत" इति चैतन्मतावतारकौ सन्दर्भौ वैयाकरणभूषणग्रन्थे (२७०-२७२पृ:)।

(२) यद्यपि प्रागप्रयोगात् स्वतन्त्रप्रयोगाभावात् षष्ठ्या अश्रुतेर्लिङ्गसंख्या-विरहाच्च वाचकवैलक्षण्येन द्योतका निपाता इति (निपातानामवाचक-त्वात्) प्रादीनामिव चादीनां निपातानां द्योतकत्वं वैयाकरणादिमते (महाभाष्यानुसारिणां हरिजिनेन्द्रबुद्धिकैयटादीनां मते, सुव्यवस्थितमेव तथापि काव्यं रसापेक्षया तेषां व्यञ्जकत्वमिति ग्रन्थोपरि पुराणतरटीका-कृतामाशयसूचनम् । वैयाकरणोक्तद्योतकताविलक्षणमेवालङ्कारिकनयो-द्दिष्टव्यञ्जकतालक्षणम् । वृत्तिस्थेन द्योतकपदेन तदेवानुसन्धीयते । प्राचां निरुक्तकारादीनामयमेव सिद्धान्तः । 'न निर्बद्धा उपसर्गा अर्था-न्निराहु'रिति शाकटायनः, 'नामाख्यातयोस्तु कर्मोपसंयोगद्योतका भव-न्ती'ति भगवद्यास्ककृते निरुक्ते च राद्धान्तः । नवीनानां वैयाकरणाना-मप्यत्र मते नारुचिः । अनुसन्धित्सुभिरत्र 'चादयोऽसत्वे' (१।४।४७) 'कर्मप्रवचनीयाः' (१।४।८२) इति सूत्रद्वयोपरि भाष्यप्रदीपोद्योतग्रन्थाः, तयोरेव सूत्रयोरुपरि न्यासकृन्मन्त्रव्यं, (३०८ पृ:,३२६ पृ:), वैयाकरण-भूषणे (२६८-२७२ पृ:), लघुमञ्जूषायां (५८४-७२३ पृ: चौखम्बा

रामोऽसौ भुवनेषु विक्रमगुणैः प्राप्तः प्रसिद्धिं परा-
मस्मद्भाग्यविपर्ययाद्यदि परं देवो न जानाति तम् ।
बन्दीवैष यशांसि गायति मरुद्यस्यैकबाणाहति-
श्रेणीभूतविशालतालविवरोद्गीर्णैः स्वरैः सप्तभिः ॥१०९

अत्रासाविति भुवनेष्विति गुणैरिति सर्वनामप्रातिपदिकवचनानां, न त्वदिति न मदिति अपि तु अस्मदित्यस्य सर्वाक्षेपिणः, भाग्यविपर्ययादित्यन्यथासंपत्तिमुखेन न त्वभावमुखेनाभिधानस्य ।

तरुणिमनि कलयति कलामनुमदनधनुर्भ्रुवोः पठत्यग्रे ।
अधिवसति सकलललनामौलिमियं चकितहरिणचलनयना ॥११०

---

मेवाहुः (१)। कृतमिति—अत्र चकाराभ्यां तुल्यकालत्वसूचकभ्यां वीर्यप्रकर्षः सूच्यते। चादीनाञ्च स्वातन्त्र्येणार्थबोधनविरहात् पदावयवमध्ये गणनम् । अत्रेति—असाविति सर्वनाम्ना प्रत्यक्षदृश्यमान-नयप्रधानत्व-महानुभावत्वादिकं व्यज्यते । 'भुवने'ष्विति बहुत्वेन निखिलव्याप्तिः, 'गुणै'रिति प्रातिपदिकेन समुदितत्वं बहुवचनेन निःशेषता, 'अस्म'दिति सकल-स्वकुल-परिग्रहः । अन्यथासम्पत्तिमुखेन-अभाग्यपदप्रयोगं विना भाग्यासम्भवप्रतिपादनेन: भाग्यानुकूल्यदशायां

---

संस्करणे) एतत्संसृष्टो विस्तृतो विचारश्चालोचनीयः ।

(१) एतच्च समुच्चयाधिकरणे मीमांसकानां 'केवलवृक्षशब्दात् समुच्चयाबोधात् चकार एव तद्वाचको न द्योतक' इत्याद्युक्तीः समर्थयमानानामचिरन्तनानामालङ्कारिकसरणिनिर्देशे प्रौढिमाकलयतां केषांचिदेतेषां मतम् । तथा च व्यक्तिविवेके प्रथमे—विमर्शे'असत्त्वभूतार्था उपसर्गादयः । तेषामसत्त्वभूतार्थत्वाविशेषेऽपि व्यापारनियमात् प्रयोगनियमाच्च त्रैराश्योपगमः । तथाहि क्रियारूपातिशयप्रतिपत्तिनिबन्धनमुपसर्गाः प्रादयः । भावसत्वयोरात्मभेदप्रत्यायननिमित्तमवद्योतरूपार्थविशेषाः स्वरादयो निपाताः...।" वाक्यपदीयटीकाकृत्पुञ्जराजीयमतमेतन्मतानुसारि । प्रकाशकृन्मन्तव्यं ('यथेववादिशब्दा यत्परास्तस्यैवोपमानताप्रतीति'रित्यादिके दशमोल्लासीये

अत्र इमनिजव्ययीभावकर्मभूताधाराणां स्वरूपस्य तरुणत्वे इति धनुषः समीप इति मौलौ वसतीति त्वादिभिस्तुल्ये एषां वाचकत्वे अस्ति कश्चित् स्वरूपस्य विशेषो यश्चमत्कारकारी—स एव व्यञ्जकः ।

---

तवापि नेदृशी दुर्विधाऽऽसीदिति । कला उपचयः । भ्रुवोरम्रेऽनुमदनधनुः पठति मदनधनुषो नैपुणं शिक्षति सति । स्वरूपस्य व्यञ्जकत्वं, नत्वेषामर्थस्यैव व्यञ्जकत्वम् । स्वरूपस्य तु त्वादि-साधारण्यमेवेत्याह–त्वादिभिरिति (१) । कश्चिदिति—इमनिचा तावत् श्रुतिकटुतापरिहारेण सौकुमार्यमारोपयता सहृदयहृदयङ्गमं किमप्यानुकूल्यं धीयते । अव्ययीभावसमासेनापि मदनधनुषो गुणीभावेन ततोऽप्यधिकं जगद्वशीकारविज्ञानं भ्रूलताऽस्य प्रत्याय्यते । मौलिमिति कर्मतया व्याप्तिसूचनेन मौलावित्याधारत्वप्रतिपाद्याधेयैकदेशवृत्तित्वपरिहारेण कोऽप्यतिशय आत्मादरपोषकः । तदिदमुक्तम्—'यश्चमत्कारकारी'ति । स एव व्यञ्जको (२) व्यञ्जकभावनियामकः । यद्वा विशिष्यत इति विशेषः स्वरूपमेव । षष्ठी त्वाहार्यभेदा(३) । स एव व्यञ्जको व्यञ्जनाव्यापाराश्रयः । व्यञ्जकत्वमिति पाठे स्वरूपस्य विशेषः स्वरूपं येन विशिष्यते स एव

---

ग्रन्थे) एतन्मतसमर्थनपरतया बहुभिरुद्धृयते । 'वस्तुतस्तु निपातानामर्थवत्त्वमपि द्योत्यताऽभिधायकं, शक्तिलक्षणाद्योतकताऽन्यतमसम्बन्धेन बोधकत्वा'दिति लघुमञ्जूषासिद्धान्त (२६३ पृ०) एव समीचीनः ।

(१) साधारण्येन प्रतीतानां जीर्णकल्पानां प्रत्ययादीनां परिहारेणास्ति कुत्र सहृदयतासहकृतपुराणच्छायानिर्मुक्तशब्दविन्यासवशाच्चमत्कारातिशयो, यस्य खलु जरत्तराणां ग्रन्थेषु 'कान्ति'रित्यन्वर्थो व्यपदेशः । परमस्य व्यञ्जनयैवानुजीवनमितीतरविलक्षणचमत्कारकारणम् ।

(२) 'स एव व्यञ्जक' इति चण्डीदासधृतः पाठः, न तु'व्यञ्जकत्वं प्राप्नोती'ति माणिक्यचन्द्रादिगृहीतः ।

(३) राहोः शिर इतिवत् ।

एवमन्येषामपि बोद्धव्यम् ।

वर्णरचनानां व्यञ्जकत्वं गुणस्वरूपनिरूपणे उदाहरिष्यते ।

अपिशब्दात्प्रबन्धेषु नाटकादिषु ।

एवं रसादीनां पूर्वगणितभेदाभ्यां सह षड्भेदाः ।

(६२) भेदास्तदेकपञ्चाशत्—

व्याख्याताः ।

---

व्यञ्जकत्वं, तद्बलेनैव स्वरूपं व्यनक्तीत्यर्थः । एवमस्मदुक्तरीत्या[ऽन्येषा-]मुक्तव्यतिरिक्तानां प्रकृत्यादिरूपाणां कर्मप्रवचनीयानाञ्च व्यञ्जकत्व-माकरेषु स्वयं दृष्ट्वा बोद्धव्यमवधारणीयम् । वर्णरचनानां वर्णानां रचनानाञ्च । नाटकादिष्विति—वस्तुमात्रालङ्कृतिध्वनिषु न केवल-मवान्तरमहावाक्यव्यङ्ग्यो रसादिः, किन्तु सर्वेष्वेव (१) काव्यप्रबन्धे-ष्वयमेकोऽङ्गीकर्त्तव्यः, अन्यथा काव्यत्वस्यैव हानेरित्यर्थः ।

पूर्वगणितभेदाभ्यां वाक्यपदप्रकाशरूपाभ्यां सह पदैकदेश-रचना-वर्णप्रकाशानाञ्चतुर्णां सङ्कलने भेदक्रमाः । ननु माघे शिशुपालदूतोक्तौ (२)सन्धौ वाच्ये वस्तुमात्ररूपो विग्रहः शब्दशक्तिमूलः प्रबन्धव्यङ्ग्यो दृश्यते । उपमादिर्ध्वनिरपि शब्दशक्तिमूलस्तथा सम्भाव्यते । तत्कथ-मेकपञ्चाशदेव भेदा इत्याह–व्याख्याता इति । विशेषेणोदाहृतिप्रदर्शन-मुखेनाख्याता दर्शिताः । नत्वेतावन्त एवेति नियमिता इत्यर्थः (३);

---

(१) आनन्दवर्धनेन ध्वन्यालोके तदनुसारिभिः काव्यप्रकाशटीकाकृद्भिः श्रीधरादिभिश्च स्वस्वटीकायामयमर्थः प्रपञ्चित इत्यनुसन्धित्सुभिस्तत एवावलोकनीयः ।

(२) शिशुपालवधे षोडशे सर्गे ।

(३) 'लक्षणा तेन षड्विधे'त्यादा-(४३ पृ:) विवात्रापि व्याख्यानशैल्यनुन्ना-वितपूर्वाऽपि नासङ्गता ।

(६३)—तेषां चान्योन्ययोजने ॥४३
संकरेण त्रिरूपेण संसृष्ट्या चैकरूपया ।

न केवलं शुद्धा एवैकपञ्चाशद्भेदा भवन्ति यावत्तेषां स्वस्व-प्रभेदैरेकपञ्चशाता संशयास्पदत्वेनानुग्राह्यानुग्राहकतयैकव्यञ्जका-नुप्रवेशेन चेति त्रिविधेन सङ्करेण परस्परनिरपेक्षरूपयैकप्रकारया संसृष्ट्या चेति चतुर्गुणने—

(६४) वेदखाब्धिवियच्चन्द्राः (१०४०४)—

शुद्धभेदैः सह—

(६५) शरेषुयुगखेन्दवः (१०४५५) ॥४४

---

एकपञ्चाशत्ता च पूर्वगणितपञ्चत्रिंशद्भेदेषु प्रबन्धव्यङ्ग्यद्वादश-विधार्थशक्तिमूलस्य पदैकदेश-वर्ण-रचना-प्रबन्धव्यङ्ग्यत्वेन रसादि-चातुर्विध्यस्य प्रवेशात्। तेषां व्यङ्ग्यभेदानाम्। शुद्धा एवैकपञ्चाशत् केवलभेदा न भवन्तीति वृत्तियोजना। स्वस्वप्रभेदैर्ध्वनितया सजातीयभेदैः। परस्परनिरपेक्षेति भावप्रधाननिर्देशः। तद्रूपत्वादेक-प्रकारतया। चतुरिति (१) वारार्थे सुच्। वेदेति— तथाहि 'विन्यस्याधो गुणन'मिति रीत्या एकपञ्चाशतस्तावतैव गुणन एकाधिकषड्विंशति-शती (२६०१)। संसृष्टौ तथैव। ततस्त्रिगुणसङ्करयोजने सत्येतावती संख्या—वेदाश्चत्वारः, खं शून्यम्, अब्धयश्चत्वारः, वियत् शून्यं, चन्द्र एकः—अङ्कविन्यासे च वैलोम्यं संख्याशास्त्रप्रसिद्धम्। शुद्धभेदैरेक-पञ्चाशता। शराः पञ्च, इषवोऽपि पञ्च, युगानि चत्वारि, खं शून्यम्, इन्दुरेकः। अयञ्च ग्रन्थो गुणीभूतव्यङ्ग्यादिसंयोगमाश्रित्य कथ-

---

(१) चण्डीदासमतः पाठ एषः। 'चतुर्भिर्गुणन' इत्यन्यैः पठितम्।

ङ्खन्नेयः (१)। संसृष्टिसन्देहादौ पूर्वपूर्वसंयोगस्य उत्तरोत्तरभेदगणना-ऽनुप्रवेशात् वक्ष्यमाणविरोधालङ्कारे (२) भेदगणनावत्क्रमेणैकैक-हान्या तावत्संख्यत्वविरहात्। वस्तुगत्या पुनरीदृशी पिण्डना—'सैक-पदाहतपददलं सङ्कलित'मिति रीत्या (३) सैकपदं द्वापञ्चाशत्, तेनाहतं पदमेकपञ्चाशत्, तद्गुणने द्वन्द्वेपुरसद्वन्द्वाः (२६५२), तस्य दलं रस-द्वन्द्ववह्निचन्द्राः (१३२६)। संसृष्टिसङ्करयोजने चाब्धिगगनशिखि-शराः (५३०४)। शुद्धयोगे तु शरबाणाग्निबाणाः (५३५५)। यद्वा 'पदयुत-पदवर्गदलं सङ्कलितम्'। पदवर्गश्चन्द्रव्योमर्तुद्वन्द्वाः (२६०१)। समपदेन युतो योऽश्विबाणर्तुद्वन्द्वाः (२६५२), तस्य दलं रसद्विगुणचन्द्राः (१३२६) संसृष्टौ। "एको राशिर्द्विधा स्थाप्य एकमेकाधिकं कुरु। अस्यैवार्द्धेन

---

(१) नेदं निपुणं दर्शनम्। गुणीभूतव्यङ्ग्यादेरुल्लासान्तरे पश्चात् सन्निवेशा-त्तस्यात्र परामर्शस्य सर्वथाऽनुपपत्तेः। संख्येयं न्यायसिद्धैव। गुणीभूत-व्यङ्ग्यादिसंयोगमाश्रित्य परस्परविमर्देन बृहत्तरा संख्या यथा संख्या-ऽऽनयनव्यसननिपुणैः कैश्चित्सुधासागरकारादिभिर्विहिता तथा सु-विदितैव प्रेक्षावताम्। "अयञ्च प्रमेयभेदः सर्वथा न प्रतिपादितो भवती"-ति 'चिन्त्यमेतदि'"त्यविचारितरमणीयमेत"'दित्यादिभिर्बहुभिर्वि'शेषणै-रितरत्र विदूषितं क्वचित् क्वचित् विध्वस्तप्रायमपि सान्धिविग्रहिक-श्रीधरमन्तव्यमन्नाप्तवाक्यतयाऽन्यत्र तन्मते दोषदर्शिना चण्डीदासेन यदूप्रगृहीतं तस्य कारणमर्वाक् "तस्मादत्र प्रकरणे ......तदुक्तिरेव लिख्यत" इति स्फुटमाविष्कृतम्।

(२) दशमोल्लासनिर्दिष्टदशभेदे। तत्र ४+३+२+१ = १० भेदाः। एवमिहापि ५१+५०+४९+......३+२+१ = १३२६ भेदाः। सर्वमेतद्गणनाविधानमस्माभिः कविकर्णपूरकृतालङ्कारकौस्तुभस्योपरि टीकायां मौक्तिकावल्यां (पृ० ९७, ११९) वितत्य दर्शितमित्यतो विरम्यते।

(३) इयं च श्रीधरमतसंमतसंख्याऽधुनातनानां गणनाऽनुसारिणी। तथा च—$1+2+......n = \frac{n(n+1)}{2}$

तत्र दिङ्मात्रमुदाह्रियते।

छणपाहुणिश्रा देश्ररजाश्राए सुहश्र किंपि दे भणिश्रा।
रुश्रइ पडोहरवलहीघरम्मि श्रणुणिज्जउ वराई ॥१११

अत्रानुनयः किमुपभोगलक्षणेऽर्थान्तरे संक्रमितः किमनुरणन-

---

सङ्कल्यमेतत्सङ्कलितं लघु' (१) इति दिशा वा सम्पिण्डनम्। तथाहि चन्द्रबाणराशिं (५१) द्विधा स्थापयित्वा एकमेकाधिकं द्वन्द्ववाणं (५२) कृत्वा तस्यैवार्धेन रसद्वन्द्व-(२६) संख्येन एकपञ्चाशतो गुणने रसद्विगुणरजनिकराः (१३२६) संसृष्टौ। अनयोश्च पिण्डनयोः सङ्करयोगे प्राचीनैव संख्या। (?)तस्मा-(?) दत्र प्रकरणे श्रीधरसान्धिविग्रहिको गणनाऽऽदिकं निखिलमेव तत्त्वतो जानातीति तदुक्तिरेव लिख्यते (२)।

दिश्यतेऽनयेति दिक्। दिगेव दिङ्मात्रं सजातीयप्रकाशकं स्वरूपमित्यर्थः। छणपाहुणिश्रा क्षणायोत्सवाय निमन्त्र्यानीता। पडोहरवलहीघरम्मि पश्चात्प्रकोष्ठोपरिकुट्टिमगर्भगृहे। अत्रानुनयमात्रेण विश्रामाभावाद्वक्त्रादिवैशिष्ट्यस्य झटिति प्रतीतौ स्वार्थमपरित्यजदेवानुनीयतामिति पदं तदुपपत्त्यै उपभोगलक्षणमर्थान्तरमालम्बत इति लक्षणामूलत्वम्। वक्त्रादिवैशिष्ट्याननुसन्धाने तु प्रतीत्यपर्यवसानविरहान्न लक्षणाऽनुप्रवेश इत्यभिधामूलतेति केनचिदुच्येत। एवञ्च सन्देहः। वक्त्रादिविशेषस्य कदाचिदननुसन्धानं सर्व-

---

(१) वस्तुतस्त्वेकैवेह रीतिरापाततो भिन्नभावयोर्लिखिता।

(२) अयं प्रघट्टक आदर्शपुस्तके 'वक्त्रादिविशेषस्य.........अतिप्रसङ्ग" इत्यनन्तरस्यांशस्य पश्चादयथैव सन्निवेशितः। सान्धिविग्रहिकेण विवेककृता श्रीधरेण गणिताचार्यश्रीधरमतमनुसरतोपरिदर्शिता गणनासरणिरङ्गीकृता यदाहासौ स्वग्रन्थे 'इत्याचार्यश्रीधरदर्शनेन सङ्कलितम्' इति।

न्यायेनोपभोग एव व्यङ्ग्ये व्यञ्जक इति सन्देहः ।

स्निग्धश्यामलकान्तिलिप्तवियतो वेल्लद्बलाका घना
वाताः शीकरिणः पयोदसुहृदामानन्दकेकाः कलाः ।
कामं सन्तु दृढं कठोरहृदयो रामोऽस्मि सर्वं सहे
वैदेही तु कथं भविष्यति ह हा हा देवि धीरा भव ॥११२

त्रैव (?) सुलभमित्यतिप्रसङ्गः । अत्रानुनीयतामित्यनेनोपभुज्यतामिति वक्तुर्विवक्षितं किंवा कोपनिवर्त्तनमात्रं चाटुकरणादीति सन्देहः । न चैकतरत्वे साधकं बाधकं वा प्रमाणमस्तीति रजनिराजोपरिभागे कुरङ्गकसद्भाववदनुच्छेद्य एवायं महान् सन्देहः (१) ।

स्निग्धया भास्वर्या श्यामलया द्राविडदेशीयप्रभासदृशया कान्त्या लिप्तं व्याप्तं नभो यैः । वेल्लनं विलासखेलनम् । पयोदसुहृदो मयूराः । आनन्दकेका मदमेदुरध्वनयः । कला मधुरगम्भीराः । कामं सन्त्विति धैर्योक्तिः । दृढं सातिशयम् । कठोरहृदय एवंविधोद्दीपनसम्भेदेऽप्यविक्रियमाणचित्त इति रामपदप्रत्याय्यनिरुद्धबोधत्वदुःखैकपात्रत्वादिभ्योऽवकाशदानम्, अन्यथा रामशब्दो महानुभवत्वं कथं न ध्वनेत् । वैदेही त्विति—स्मृतेरेवंविध-

---

(१) तथा च हेमाद्रिधृतज्योतिषवचनम्—'शशमेके मृगं त्वन्ये भूच्छायामपरे विदुः । इन्दोर्मण्डलमालिन्यं तमःस्पर्शमलं परे । इति महर्षिगोतमकृते संशयलक्षणे (१।१।२३)—'उपलब्ध्यनुपलब्ध्यव्यवस्थातश्च……… विशेषापेक्षो विमर्शः संशय' इति दृश्यते । वात्स्यायनभाष्ये च तस्येदं विवरणं'सच्चोदकमुपलभ्यते तडागादिषु मरीचिषु चाविद्यमानमुदकमिति । अतः क्वचिदुपलभ्यमाने तत्त्वव्यवस्थापकस्य प्रमाणस्यानुपलब्धेः किं सदुपलभ्यतेऽथासदिति संशयो भवती'ति । अत्र च गाथागतार्थे 'उभयथाऽप्युपभोग एव तात्पर्यपर्यवसानात् सन्देहस्यादोषत्व'मिति प्रदीपप्रभाव्याख्यानम् ।

अत्र लिप्तेति पयोदसुहृदामिति चात्यन्ततिरस्कृतवाच्ययोः संसृष्टिः । ताभ्यां सह रामोऽस्मीत्यर्थान्तरसंक्रमितवाच्यस्यानुग्राह्यानुग्राहकभावेन रामपदलक्षणैकव्यञ्जकानुप्रवेशेन चार्थान्तर-

---

सभयसातङ्कसरभसकण्ठग्रहणपूर्वकालकृताङ्कपालिनयनादितद्विलासस्योक्तिः । कथं भविष्यति-स्मृतेरेवंविधविशेषायास्तस्या भवनमात्रमप्यसम्भाव्यमित्यर्थः । इतः प्रभृति स्मृति-भावना-विकल्पपरम्परोपपरीतां चिरदुर्बलतया झटिति हृदयास्फोटनाभिमुखीं प्रियां ससम्भ्रमोन्मादवशंवदः साक्षादिवाह-ह हा हेति । सुहृदामिति अत्रेति......? मित्रार्थासम्भवान् परितोषकारित्वं लक्ष्यते । स्निग्धपदेन घृतादिस्नेहतिरस्कारेण नयनाभिरामतां लक्षयता तिरस्कृतवाच्यत्वेन संसृष्टिर्द्रष्टव्या । संसृष्टिश्च भिन्नाश्रययोरङ्गाङ्गिभावहीनयोरेकवाक्यगतत्वात् । अनुग्राह्यानुग्राहकभावेनेति—रामपदद्योत्ये हि ईदृश्यामप्यवस्थायां जीवितं धारयन्तं मां धिगित्यादौ स्निग्धलिप्तादिपदानां साचिव्यं विद्यते । एकव्यञ्जकेति—अङ्गाङ्गिभावस्य रसं प्रति सार्वत्रिकतया तदनपेक्षयोक्तम् । यत्तु श्रीधरसान्धिविग्रहिकेणोक्तम् 'अत्र व्यभिचारिरसध्वन्योरेकवाक्यव्यङ्ग्यत्वं,विप्रलम्भस्य तद्व्यभिचारिणश्च निर्वेदशोकावेगात्मनश्चर्वणीयत्वा'दिति,तन्न समीचीनम (१) । 'अखण्डः काव्यार्थ' इति नीत्या श्लोक

---

(१) श्रीधरग्रन्थ एवमुपलभ्यते—"यथाऽत्रैव रामशब्द एवार्थान्तरसंक्रमितवाच्यः समुद्दीपनविरोधो-(?)(विभावो) द्बोधितस्य विप्रलम्भस्य व्यञ्जकः । सर्वस्मिन्नेव रसाद्यात्मनि काव्येऽलक्ष्यक्रमव्यङ्ग्यस्य रसभावलक्षणस्वप्रभेदप्रतीत्यपेक्षयैकव्यञ्जकवाक्यद्वारेण व्यञ्जकत्वं सम्भवत्येव । यथाऽत्रैव रसध्वनेर्भावध्वनेश्चैकेन व्यञ्जकेन विप्रलम्भस्य तद्व्यभिचारिणश्च निर्वेदशोकावेगात्मनश्चर्वणीयत्वा"दिति । चण्डीदासमन्तव्यं काव्यतत्त्वानुसन्धायिनां काव्यलक्षणविधायिनाञ्चोपलब्धिमतानुसारीति न दुर्ग्रहग्रहिलोऽयमुपरितनः पक्षः ।

संक्रमितवाच्यरसध्वन्योः सङ्करः ।

एवमन्यदप्युदाहार्यम् ।

इति काव्यप्रकाशे ध्वनिनिर्णयो नाम चतुर्थ उल्लासः ।

---

एवात्र धैर्य-निर्वेद-स्मृति-शङ्का-शोकावेगोल्लास-परिपुष्ट-रतिप्रकृतिक-विप्रलम्भास्वादः समूहालम्बनरूपः । आस्वादात्पूर्वं व्यभिचारिव्यञ्जन-मात्रेण तु न व्यभिचारिध्वनित्वम् । वाच्यतः प्राधान्यमात्रेण ध्वनिमात्र-त्वमिति चेत्, न । स्फुटत्वात् वाच्यसिद्ध्यङ्गाच्च । अस्तु वाच्यतः प्राधान्यं, तथापि वस्तुध्वनिरेव । तेन रूपेण तस्य सञ्चारित्वाभावात् स्थायिध्वनिरप्येवं स्यादिति च दोषान्तरम् । अन्यदिति—सजातीय-माश्रितं रसाद्यालङ्कारवस्तुरूपं प्रधानभूतं व्यङ्ग्यान्तरमिति ।

॥ इति चतुर्थ उल्लासः ॥